तद् व्याचष्टे—

**मेधातिथिं ह काण्व्यायनं मेषो भूत्वा जहार ॥ १५ ॥**

काण्व्यायनं कण्वस्य युवापत्यं मेधातिथिरितिनामानम् ऋषिम् इन्द्रो मेषो मेषरूपधारी जहार ह स्वर्गं निनाय किल । तथा च बह्वृचा आमनन्ति—इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिं मेषो भूतोऽभि यन्नयः । (ऋ. वे. ८. २. ४०) इति । अतो मेधातिथेर्मेषेति इन्द्रः संबोध्यते ॥ १५ ॥

पुनरपि निगदशेषमुपादत्ते—

**वृषणश्वस्य मेन इति ॥ १६ ॥**

तद् व्याचष्टे—

**वृषणश्वस्य ह मेनस्य मेनका नाम दुहितास । तां हेन्द्रश्चकमे ॥ १७ ॥**

मेनाख्यस्य वृषणश्वस्य वृषणश्व इत्यपरनामधेयस्य राजर्षेः मेनका नाम काचिद् दुहिता आस बभूव । तां मेनकाम् इन्द्रश्चकमे ह कामितवान् किल । अनेन संबन्धेन वृषणश्वस्य मेन इति इन्द्र उपचारेणामन्त्र्यते । तथा च बह्वृचा आमनन्ति—मेनाभवो वृषणश्वस्य सुक्रतो (ऋ. वे. १. ५१. १३) इति ॥ १७ ॥

भागान्तरमुपादत्ते—

**गौरावस्कन्दिन्निति ॥ १८ ॥**

तद् व्याचष्टे—

**गौरमृगो ह स्म भूत्वावस्कन्द्यारण्याद्राजानं पिबति ॥ १९ ॥**

---

2&3. B. काण्वायन for काण्व्यायनं

5. R. इत्थाधावन्तम् for इत्था धीवन्तम् ; R. मेधातिथं BBh MTIS मेधा० for मेध्या० ; Bh I हिं for ०भि.

7. R. संबुध्यते for संबोध्यते.

11. Bh. वृषण्वश्वस्य for वृषणश्वस्य.

13. RSI मेनका० for मेना० ; M. om. वृषणश्वस्य ; JA. om. वृषणश्व इत्यपरनामधेयस्य राजर्षेः.

18. BhRA नमा० M. निगदा० for भागा०.

इन्द्रः किल गौरमृगो भूत्वा अरण्यादवस्कन्द्य । स्कदिर्गत्यर्थः । राजानं सोमम् । सोमो वै राजा इति श्रुतेः । पिबति स्म । स वा गौरश्चासाववस्कन्दी चेति कर्मधारयसमासेन गौरावस्कन्दिन्निति इन्द्रः संबोध्यते ॥ १९ ॥

अंशान्तरमुपादत्ते—

**अहल्यायै जारेति ॥ २० ॥**

बहुलवचनात् षष्ठ्यर्थे चतुर्थी । अहल्यायाः जारेत्यर्थः ॥ २० ॥

तद् व्याष्टे—

**अहल्याया ह मैत्रेय्या जार आस ॥ २१ ॥**

इन्द्रः किल मैत्रेय्याः, मित्राया दुहिता मैत्रेयी तस्याः अहल्यायाः जार उपपतिरास बभूव ॥ २१ ॥

अंशान्तरमुपादत्ते—

**कौशिक ब्राह्मणेति ॥ २२ ॥**

तद् व्याचष्टे—

**कौशिको ह स्मैनां ब्राह्मण उपन्येति ॥ २३ ॥**

कौशिकः कुशिकगोत्रोत्पन्नः कश्चिद् ब्राह्मणः एनां प्रकृताम् अहल्याम् उपन्येति स्म ह । इण् गतौ । लट् स्मे (पा. ३. २. ११८) इति परोक्षे लट् । उप-नीति उपसर्गौ । उपन्यगच्छत् । उपयेमे किलेत्यर्थः । तस्याः जारः सन् तद्भर्तृस्थाने तिष्ठतीति कौशिक ब्राह्मणेत्युपचारादामन्त्र्यते ॥ २३ ॥

---

1. MJS स्कन्दिद्; for स्कदिर् A स्कन्दिर्नस्यार्थः, Bh स्कन्दिनं स्वार्थः. for स्कदिर्गत्यर्थः ।

2. R. यो, Bh MTS वो for वा; JA om. स वा.

4. R. अर्था० for अंशा०.

8. Bh. adds सः ofter जारः; T. जारप्रियः for जारः.

9. Bh MTSI मित्रा for मित्रायाः.

11. R. अर्था० for अंशा०.

15. M. कौशिक० for कुशिक०; B. om. प्रकृताम्.

16. R BBh JA लिट्, IS लङ् for लट्.

17. JA सर्गेण for ०सर्गौ.

भागान्तरमुपादत्ते—

**गौतमब्रुवाणेति ॥ २४ ॥**

गौतमोऽहमिति ब्रुवाणः । यद्वा । गौतमरूपेण चरन् गौतम इति जनैरुच्यमानो गौतमब्रुवाणः । ब्रुवतेः कर्तरि व्यत्ययेन कर्मणि शानच् । तस्य संबोधनं गौतमब्रुवाणेति ॥ २४ ॥

तद्व्याचष्टे—

**देवासुरा ह संयत्ता आसंस्तानन्तरेण गौतमः शश्राम । तमिन्द्र उपेत्योवाचेह नो भवान्त्स्पशश्चरत्विति । नाहमुत्सह इति । अथाहं भवतो रूपेण चराणीति । स यथा मन्यस इति । स यत्तत् गौतमो वा ब्रुवाणश्चचार गौतमरूपेण वा तदेतदाह गौतमेति ॥ २५ ॥**

देवासुरा ह देवाश्चासुराश्च । किम् (!) संयत्ताः परस्परं योद्धुमुद्युक्ताः आसन् बभूवुः । तानन्तरेण तेषां मध्ये । अन्तरान्तरेण युक्ते (पा. २. ३. ४) इति द्वितीया । गौतमो नाम ऋषिः शश्राम श्रान्तः सन् उपाविशत् । तं गौनममुपेत्य उपगम्य इन्द्रः एवमुवाच । असुराः भवन्तं बाधेरन् । अत इहैव नः अस्माकं स्पशश्चारो भूत्वा भवान् चरत्विति । एवमुक्तवन्तमिन्द्रमृषिराह अहमेवं चाररूपेण वर्तितुं नोत्सहे उत्साहं न करोमीति । अथ गौतमवचनादनन्तरम् इन्द्रो ब्रवीति । तर्हि अहं भवतो

---

1. R Bh JA अथ नामा० for भागा०.

3. Bh JA om. अहम्; R. adds गौतमब्रुवाणेति तद्व्याचष्टे after यद्वा; JA add ह after इति; RJA. गोतम० for गौतम०.

4. MTSIK ब्रवीतेः for ब्रुवतेः.

8. K Bh. ह for इह.

9. T. (आ) ह for (अ)हं.

10. RBJ गो० for गौ०; Bh T. om. वा.

11. RBJIA गो० for गौ०.

16. RBMSI. om. नः; MTS स्पर्श० for स्पश०.

17. Bh JA (ए)व for (ए)वं.

18. Bh JA ०वचनानन्तरम् for ०वचनादनन्तरम; Bh A ०ऽब्रवीदिति for ब्रवीति.

रूपेण स्पशः सन् चराणीति । तदनुमन्यतां भवानिति । पुनर्गौतमो ब्रवीति हे इन्द्र त्वं यथा येन प्रकारेण चरितुं मन्यसे तथा चरेति । पश्चादिन्द्रस्तथैवाचरदिति शेषः । स इन्द्रः तत् तदानीं गौतमोऽहम् इति स्वयं वदन् गौतमरूपेण गौतम इति जनैरुच्यमानो वा चचारेति यत् तदेवाचरणमाह गौतमेति । गौतमब्रुवाणेति पदस्य एकदेशोपादानम् ॥ २५ ॥

प्रतीकतः निगदशेषमुपादत्ते—

**इत्यहे सुत्यामागच्छ मघवन्निति ॥ २६ ॥**

हे मघवन् धनवन् इन्द्र इत्यहे एतावदहे द्व्यहे त्र्यहेऽतिक्रान्ते सुत्यामागच्छ । परेद्युः सुत्या चेत् श्वः सुत्यामागच्छेत्यादेशः कार्यः । तथा च जैमिनिः—श्वः सुत्यामित्यौपवसथ्ये निर्दिशेत् इति । सुत्यया समानेऽहनि तु अद्य सुत्यामागच्छेत्यादेशः कार्यः । तथा द्राह्यायणः—अद्येति समानाहनि (ला. श्रौ. १. ३. २) इति ॥ २६ ॥

यत्तद्याचष्टे—

**तद्यथार्हतो ब्रूयादित्यहे वः पक्तास्मि तदागच्छतेत्येवमेवैतद्देवेभ्यः सुत्यां प्राह ॥ २७ ॥**

उपलक्षणमेतत् । तत् तत्र यथार्हतो यथायोग्यं ब्रूयात् । तस्यैव विवरणम्—इत्यहे एतावदहे द्व्यहे त्र्यहे वा देवाः वः युष्मदर्थं हविषां

---

1. Bh MTS स्पर्शः for स्पशः; BJA ०र्गो० for ०र्गौ०.
2. R. om. यथा.
3. RMTSI om. स इन्द्रः; R. om. स्वयं वदन्, M. om. स्वयं
4. MK तत्तदेव० for तदेव०.
5. K. ०ब्राह्मणेति वदन् तस्य for ब्रुवाणेति पदस्य; Bh TA पदम् for पदस्य; JA add एकदेशः before एकदेशोपादानम्.
6. JA प्रतीतेः ।, Bh. प्रतीतिः for प्रतीकतः
8. K. धनप for धनवन्; Bh JA. त्र्यहे द्व्यहे for द्वयहे त्र्यहे.
10. RJA add अहनि after ०सथ्ये See CN.; ABh J. om. इति; R. सुत्यायाः for सुत्यया; Bh JA आगमने for समाने.
11. R BBh T समानेऽ for समाना०
16. R. इतरत्र for तत् तत्र; Bh JSA om. तत्.
17. Bh TJA त्र्यहे द्वयहे for द्वयहे त्र्यहे; RBJSIA. om. वा.

पक्तास्मि तदागच्छतेति । एवमेव अनेन प्रकारेण यद् ब्रूयात्तदेतद् देवेभ्यः सुत्यामेव प्राहेति ॥ २७ ॥

निगदशेषं प्रतीकेनोपादत्ते—

**देवा ब्रह्माण इति ॥ २८ ॥**

देवा ब्रह्माण आगच्छतागच्छतागच्छत (ला. श्रौ. सू. १.३.३) इति निगदशेषः । हे देवाः हे ब्रह्माणः हे ब्राह्मणाः आगच्छत । त्रिरुक्तिरदृष्टार्था वा ॥ २८ ॥

एतद् व्याचष्टे—

**देवा हैव देवा अथ हैते मनुष्यदेवा ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः ॥ २९ ॥**

देवाः प्रसिद्धा वस्वादय एव देवाः । अथ पुनः एते ह वक्ष्यमाणा एव मनुष्यदेवाः ये ब्राह्मणाः परिवृढा इति कीर्त्यन्ते इति शेषः । के ते मनुष्यदेवा इत्यत उक्तम्—शुश्रुवांसः [इति] । श्रुतवन्तः अर्थविदः अनूचानाः साङ्गवेदाध्यायिनो ये ब्राह्मणाः ते मनुष्यदेवाः ॥ २९ ॥

किं देवानां भागधेयं किंच ब्राह्मणानां य[द्]दानेन प्रीणयितुं तानु-भयानाह्वयतीत्यत्राह—

**आहुतय एव [भागधेयं] देवानां दक्षिणा मनुष्यदेवानाम् । आहुतिभिर्हि देवान् प्रीणाति । दक्षिणाभिर्मनुष्यदेवान् शुश्रुवुषोऽनूचानान् ब्राह्मणान् प्रीणाति ॥ ३० ॥**

---

1. R. om. एतद्.
4. TK. ब्राह्मणाः for ब्रह्माणः.
5. T. ब्राह्मण[ाः] for ब्रह्माणः; Bh. आगच्छतेति for आगच्छता०...
6. T. ब्राह्मणाः for ब्रह्माणः; Bh. om. हे ब्राह्मणाः.
9. T. ब्राह्मणदेवाः for ब्राह्मणाः
10. Bh JA combine this and the following text and reproduce आहुतय एव....ब्राह्मणान् प्रीणाति after आत्राह (L. 16) again in the commentary.
12. R Bh BTSI कीर्त्यते P कीर्त्यन्ते; Bh T हे JA अथ है for के.
13. Bh JA om. अर्थविदः
15. T. सतत, JA तत्र, for य[द्]; B अनेन for दानेन.
19. KTI. शुश्रूषो० for शुश्रुवुषो०

देवानां वस्वादीनाम् आहुतय एव भागधेयम् । मनुष्यदेवानां ब्राह्मणानां दक्षिणा गवादिरूपा भागधेयम् । तस्यैव विवरणम्——हि यस्मात् आहुतिभिः देवान् प्रीणाति प्रीणयति यजमानः । तथा मनुष्यदेवान् शुश्रुवुषः श्रुतवतः । श्रु श्रवणे इत्यस्मात् क्वसुः । तदन्तस्य द्वितीयाबहुवचने वसोः संप्रसारणे कृते रूपम् । अनूचानान् साङ्गवेदाध्यायिनो ब्राह्मणान् दक्षिणाभिः प्रीणाति प्रीणयति ॥ ३० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे
प्रथमाध्याये प्रथमः खण्डः ॥ १ ॥

---

1. A देवादीनां for देवानां ; Bh JA add इति after वस्वादीनाम्.
3. R. adds हि, JSA इ after आहुतिभिः; R. om. प्रीणाति.
4. BTIAK शुश्रूषः for शुश्रुवुषः; Bh JA तस्य for तदन्तस्य.

## द्वितीयः खण्डः

सुब्रह्मण्याशब्दो देवताया नामधेयमुत मन्त्रस्येति जिज्ञासायामुभयोर्नामधेयमित्याख्यायिकया प्रतिपादयितुं प्रथमं देवतानामधेयत्वं दर्शयितुमुपक्रमते—

**अथ यत्र सुब्रह्मण्यः सुब्रह्मण्यामाह्वयत्येतस्मिन् ह कालेऽसुररक्षांसि देवानां यज्ञमजिघांसन् ॥ १ ॥**

अथ-शब्दः आख्यायिकोपक्रमलक्षणार्थः । यत्र देवेषु यजमानेषु । यस्मिन् काले सुब्रह्मण्यः एतन्नामा ऋत्विक् सुब्रह्मण्यामाह्वयति तस्मिन्नाह्वानकाले देवानां संबन्धिनं यज्ञमसुराश्च रक्षांसि च असुररक्षांसि देवयोनयः क्रूरकर्माणः । अत एव यास्कः असुरा रक्षांसीत्येके (नि. ३. २. ८) इति । अजिघांसन् हन्तुमैच्छन् किल ॥ १ ॥

ततः किमित्यत्राह—

**ते देवा निह्वमेवा(०वाम् ?)कुर्वत ब्रह्मो३म् सुब्रह्मो३म् इति ॥ २ ॥**

---

2. RBJSIA देवता for देवतायाः

3. Bh A ०ख्याथिका, J ०ख्यायिकां, T ०ख्यायिकाश्च for ०ख्यायिकया.

5. R BBh (आ)जिघांसन् for (अ)जिघांसन्.

6. RBSBh ०कोपलक्षणार्थः for ०कोपक्रमलक्षणार्थः; K. यज्ञमायन्तु, यज्ञमानसु, B. यज्ञमजिघांसन् for यजमानेषु; SI om. यजमानेषु.

8. Bh. om. असुराश्च रक्षांसि च; TJ असुररक्षांसि असुरा (०राश्च J) रक्षांसि च । रक्षांसि for असुराश्च रक्षांसि च.

9. JA घतका गन्धर्वाः पितरो देवाः असुररक्षांसीत्यके for असुरा रक्षांसीत्येके

12. Bh. निहतम् for निह्वम्.

देवाः परस्परं निह्वं देवतायां नीचैरुपाह्वानम् एव आम् अनुनासिकः छान्दसः । आभिमुख्येन अकुर्वत । ब्रह्मों सुब्रह्मोम् इति एवम् । सुब्रह्मण्यो-मित्यर्थः । वर्णलोपश्छान्दसः ॥ २ ॥

ततः परं किमभूदित्यत्राह—

**तानादित्यः पर्जन्यः पुरोबलाको भूत्वाभिप्रैत् । तान् वृष्ट्याशन्या विद्युताहन् ॥ ३ ॥**

तैरेवमाहूत आदित्य आदित्यात्मक इन्द्रः पर्जन्यः वर्षोन्मुखो मेघः सन् । तत्रापि पुरोबलाकः सर्वेषां पुरोगामी मेघो भूत्वा तान् देवान् अभिप्रैत् अभिमुखं प्रागच्छत् । आगत्य च तान् यज्ञविघ्नकारिणोऽसुरान् राक्षसांश्च अशन्या अहितया वृष्ट्या विद्युता विद्योतनेन स्वप्रकाशेन अहन् अहंसीत् । एतत्तु वक्ष्यमाणविचारार्थत्वेनाभिहितमिति मन्तव्यम् ॥ ३ ॥

सुब्रह्मण्यायाः स्त्रीपुंनपुंसकात्मकत्वं विमर्शपूर्वकं व्युत्पादयितुं संशयं तावद्दर्शयति—

**तदाहुः स्त्री सुब्रह्मण्या३पुमा३न्नपुंसका३मिति ॥ ४ ॥**

---

1. J. om. आम्...छान्दसः; SI. आङ् for आम्.
2. J. adds अनुनासिकः छान्दसः ofter ब्रह्मोम्.
3. JA ०त्यर्थवन्न लोपः for ०त्यर्थः । वर्णलोपः; JA om. छान्दसः
4. BBh. om. ततः; JA अतः for ततः; J om. अभूत; BBh JIA om. अत्र; A अन्विच्छेत् for अभूत्.
7. T. आह्वतः for आहूतः; JA वर्षामुखः for वर्षोन्मुखः; T om. मेघः.
8. KT ०प्रेतः for प्रैत्.
9. Bh. आश्रित्य, JA यज्ञमाश्रित्य for आगत्य; Bh TJA. om. राक्षसांश्च.
10. BSI. अहितिभीतया for अहितया ; K. विद्योतनैः for विद्योतनेन; Bh JA ०काशनेन for ०काशेन.
11. R. om. तु; Bh IJA विचारत्वेन for विचारार्थत्वेन.
12. Bh J पुंसकत्वं. for पुंनपुंसकात्मकत्वं ; Bh JA ०पूर्वं for पूर्वकं ; Bh. संभवं, K. संवादा for संशयं.
15. JA combine this and the following text. R Bh JA om. तत्.

तत्तत्र सुब्रह्मण्याया देवताविषयत्वे सुब्रह्मण्या किं स्त्री उत पुमान् आहोस्विन्नपुंसकम् ? [इति ।] विचारार्थे प्लुतः । स्वार्थिकस्तद्धितः । सुब्रह्मै सुब्रह्मण्येति । आहुः ब्रह्मवादिनः ॥ ४ ॥

उत्तरं दर्शयति—

**सर्वमेवेति ब्रूयात् ॥ ५ ॥**

यद्येवं विचारं कुर्युः तर्हि सर्वं स्त्रीपुंनपुंसकात्मकमेव सुब्रह्मण्येत्युत्तरं ब्रूयात् ॥ ५ ॥

कथम् एकस्य स्त्रीपुंनपुंसकात्मकत्वमित्यत्राह—

**यत्पर्जन्यः पुरोबलाको भूत्वाऽभिप्रैत्तेन पुमान् । यद् वृष्ट्या यदशन्या तेन स्त्री । यद्विद्युता तेन नपुंसकम् । तस्मात् सर्वमेवेति ब्रूयात् ॥ ६ ॥**

यद् येनेन्द्रः पर्जन्यो वर्षोन्मुखो मेघः सन् पुरोगामी बलाको भूत्वा अभिप्रैत् देवान् तेन पुंरूपपर्जन्यात्मकत्वेन पुमान् । यत् येन वृष्ट्या यत् येन वाशन्या असुरानवधीत् तेन स्त्रीरूपवृष्ट्यशन्यात्मकत्वेन स्त्री भवति । यत् येन विद्युताहन् । विद्युच्छब्दो नपुंसकलिङ्गोऽप्यस्ति । औणादिकः क्विप् बहुलवचनान्नपुंसकलिङ्गेऽपि भवतीति । तेन नपुंसकविद्युदात्मकत्वेन नपुंसकम् । तस्मात् सुब्रह्मण्या सर्वमेव भवतीति ब्रूयादिति सूक्तमेत्र ॥ ६ ॥

---

1. JA, पुंनपुंसकात्मकत्वम् एव सुब्रह्मण्येति । उत्तरं ब्रूयात् । सर्वमेवेति for तत्तत्र...उत्तरं ब्रूयात् (ll. 1-7); Bh. om. उत पुमान्..,सर्वं स्त्री (ll. 1-6).

7. T; ब्रह्मणः for ब्रूयात्.

8. Bh JA om. इति; Bh JA तत्र for अत्र.

9. Bh. ०प्रेतेन for ०प्रैत्तेन.

12. Bh JA वर्षामुखो० for वर्षोन्मुखो०.

13. JA adds तान् and Bh तद् after ०प्रैत ; J om. वृष्ट्या यत् येन.

14. J च for वा; J adds च after तेन.

16. Bh BJ ०लिङ्गोऽपि for लिङ्गेऽपि.

17. Bh. नपुंसकत्वं for नपुंसकं; Bh JB. add इति च after सर्वमेव; BJ Bh. सर्वमेव for सूक्तमेव.

अथ सुब्रह्मण्याया मन्त्रविषयत्वेऽपि स्त्रीपुंनपुंसकात्मकत्वं व्युत्पादयितुं विमर्शपूर्वकम् ऋग्यजुःसामात्मकत्वं दर्शयति—

**तदाहुर्ऋक् सुब्रह्मण्या३यजू३स्सामा३इति । सर्वमेवेति ब्रूयात् । ऋच इवास्या नामधेयं सुब्रह्मण्येति । तस्मादृक् । मन्त्र एव खल्वयं निगदभूतो भवति । तस्माद्यजुः । सामकारिणः कुर्वन्ति यथान्यैः सामभिः । तस्मात् साम । तस्मात् सर्वमेवेति ब्रूयात् ॥ ७ ॥**

तत्र सुब्रह्मण्याशब्दस्य मन्त्रनामधेयत्वे सुब्रह्मण्या किम् ऋक् किं वा यजुः उत साम । विचारार्थः प्लुतः । इति यद्याहुः तर्हि सर्वमेव ऋग्यजुःसामानि सर्वाण्यपि सुब्रह्मण्येत्युत्तरम् । तस्य विवरणम् । ऋच इव यथा ऋग्रूपस्य मन्त्रस्य स्त्रीलिङ्गः ऋक्शब्दो नामधेयम, तथास्याः सुब्रह्मण्यस्य मन्त्रस्य, सुब्रह्मण्येति स्त्रीलिङ्गं नामधेयम् । तस्माल्लिङ्गसाम्यात् ऋक् सुब्रह्मण्या । अयं सुब्रह्मण्याशब्दवाच्यो मन्त्रो निगदभूत एव भवति खलु । निगदो नाम यजुर्विशेषः तस्माद्यजुः । यथा यस्मात् सामकारिणः सामगाः अन्यैः सामभिः सह कुर्वन्ति एवं पठन्ति तस्मात् साम । तैः पठ्यमानत्वात् । तस्मात् सर्वमेव ऋग्यजुःसामेति ब्रूयात् । ऋङ्निगदसामात्मकत्वेन मन्त्रविषयेऽपि स्त्रीपुंनपुंसकत्वमित्यभिप्रायः ॥ ७ ॥

एवं सुब्रह्मण्याह्वानं दर्शयित्वा ततो यत् कर्तव्यं तदाह—

---

1. T ०ण्ययोगं च, BJ Bh ०ण्यायोगित्वं० for ०ण्याया मन्त्र०; J BhB. ०विषयत्वेन for विषयत्वे.

2. B. विमत० for विमर्श०.

3. S om. यजू३ स्सामा३...त्सुब्रह्मण्या० (ll. 3—8.)

8. J अथवा for किंवा; J adds वा after यजुः.

9. J before विचारार्थः adds (इ)त्याशङ्क्य सर्वमेवेत्युक्तम् । ऋग्यजुः-साम०; Bh A. यथा०, J यदा० for यद्या०; JA add तत् before सर्वम्.

10. Bh JA om. तस्य विवरणम्...सुब्रह्मण्यस्य मन्त्रस्य.

12. Bh JA om. नामधेयम् । तस्माल्लिङ्ग; Bh. सामान्यात् for साम्यात्.

14. JA om. अन्यैः.

15. Bh A. सामगैः for साम तैः; J सामगैः for तैः.

16. Bh JA ०विषयेष्वपि for विषयेऽपि.

तद्वा एतत्सुब्रह्मण्यामाहूय यजमानं वाचयति रक्षसामपहत्यै ॥ ८ ॥

सुब्रह्मण्यामाहूय तत् तदा एतद् वक्ष्यमाणं यजुः यजमानं वाचयति वाचयेत् । रक्षसां सुब्रह्मण्यादेवताधिष्ठितेष्टकेषु संचरतामपहत्यै अपहननाय । यजमानवचनं स्तुत्यर्थम् ॥ ८ ॥

वाचनीयमन्त्रभागाननूद्यानूद्य व्याचष्टे—

सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पाद इत्याह । यान्येव पृथिव्यामसुररक्षांसि तान्येव तेनापहते । सासि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पाद इत्याह । यान्येवान्तरिक्षेऽसुररक्षांसि तान्येव तेनापहते । सासि सुब्रह्मण्ये तस्यास्ते द्यौः पाद इत्याह । यान्येव दिव्यसुररक्षांसि तान्येव तेनापहते । सासि सुब्रह्मण्ये तस्यास्ते दिशः पाद इत्याह । यान्येव दिक्ष्वसुररक्षांसि तान्येव तेनापहते । परोरजास्ते पञ्चमः पाद इत्याह । परं रजसो वै ब्रह्मणः स्थानम् । तदेतदाह सा न इषमूर्जं धुक्ष्वेत्याह । इषमेवास्मा ऊर्जं दुग्धे । वीर्यमन्नाद्यं धेहीत्याह । वीर्यमेवास्मा अन्नाद्यं दधाति ॥ ९ ॥

---

3. RSIKM. तद्वैतदेव एतत् सर्वात्मकां सुब्रह्मण्याम् इन्द्रं सुब्रह्मण्यशब्दवाच्यम् आहूय सुब्रह्मण्य (M. om. hereafter) ऋत्विक् यजमानं वाचयति सासीत्यादिवक्ष्यमाणान् मन्त्रान् । for सुब्रह्मण्यामाहूय...वाचयेत; Bh A om. तत्, J वा for तदा; J Bh A. om. यजुः.

4. KSI om. ०देवताधिष्ठितेष्टकेषु संचरता०; RJA ०धिष्ठितेषु for ०धिष्ठितेष्टकेषु.

6. J Bh तत्सर्वम् for मन्त्रभागान; R. om. one अनूद्य; A om. मन्त्रभागान्...व्याचष्टे.

8. M. om. सासि सुब्रह्मण्ये...वीर्यमन्नाद्यं धेहि. (11.8-16)

14. BSIKM परां for परं.

हे सुब्रह्मण्ये त्वं सा प्रसिद्धा सर्वदेवतात्मकेन्द्ररूपा असि भवसि । तस्यास्ते पृथिवी प्रथमः पाद इति यजुर्भागम् आह यजमानः पठेत् । तेन मन्त्रपाठेन यान्येव असुररक्षांसि असुराश्च रक्षांसि च पृथिव्यां सन्ति तानि सर्वाण्येवापहते विनाशयति । एवमन्यदपि व्याख्येयम् । तत्ते तव परोरजाः रजसो लोकात् परः उत्कृष्टो ब्रह्मणो लोकः स परोरजाः । स एव पञ्चमः पादः इति तदाह । रजसः परं ब्रह्मणः स्थानम् । तदेतत् स्थानं परोरजाः इत्येतत् पदमाह । तथा सा प्रसिद्धा त्वं नः अस्मभ्यम् इषम् अन्नम् ऊर्जं तद्रसं च धुक्ष्व प्रपूरय इति यदाह तेन सा देवता अस्मै यजमानाय इषमूर्जं च दुग्धे । किं च वीर्यं बलम् अन्नाद्यम् अन्नादिकं धनं च धेहि प्रयच्छेति यदाह तेन सा अस्मै यजमानाय वीर्यम् अन्नाद्यं च दधाति ॥ ९ ॥

निगदप्रशंसापूर्वकं सुब्रह्मण्याह्वानस्य कालं दर्शयति—

**ब्रह्मश्रीर्वै नामैतत् साम यत्सुब्रह्मण्या तस्मात् प्रातरनुवाक उपाकृते विसंस्थिते च यज्ञे सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति ॥ १० ॥**

अयं सुब्रह्मण्यानिगदो ब्रह्मश्रीर्वै ब्रह्मणा वेदेन श्रीयते । ब्रह्म वेदं श्रयतीति वा ब्रह्मश्रीरेव । किंच । सुब्रह्मण्येति यत् [एतत्]त्साम नाम । नाम प्रसिद्धं साम । सामगैः क्रियमाणत्वात् । यस्मादेवं तस्मात् प्रातरनुवाके उपाकृते प्रारब्धे विसंस्थिते असमाप्ते च यज्ञे प्रत्यहमहर्गणेषु सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति ॥ १० ॥

प्रशंसापूर्वकं सुब्रह्मण्याय अनडुद्युक्तस्य अनसो दानं विधत्ते—

---

2. Bh JA नाम TM. भागः for भागम्.
3. B. मन्त्रेण for मन्त्रपाठेन; M. om. असुररक्षांसि.
4. BR सर्वाण्येवास्येव०, M सर्वाण्येव तना०, SI सर्वाण्येवास्यैवा० for सर्वाण्येवा०; Bh JA व्याख्यायते for व्याख्येयम्.
5. Bh. ब्राह्मलोकः for ब्रह्मणो लोकः.
6. R om. तदेतत् स्थानं.
7. Bh JA परम् for पदम्; BI. तदा for तथा.
9. Bh JA add च after बलं; RSI add गाः after धनं.
20. I om. सुब्रह्मण्याय; BIS अनडुद्दस्तद्युक्तस्य M. अनडुहं तस्य for अनुडुद्युक्तस्य.

एष वै ब्रह्म सुब्रह्म चाप्नोति य एतदनो युक्तं सुब्रह्मण्याय ददाति ॥ ११ ॥

एष वै अयमेव यजमानः ब्रह्म अग्निं सुब्रह्म इन्द्रं च आप्नोति । यो युक्तम् अनडुद्भ्याम् एतदनः सुब्रह्मण्याय ददाति ॥ ११ ॥

यथोक्तलक्षणायाः सुब्रह्मण्याया वेदितारं प्रस्तौति—

ब्रह्मणा चैवास्य श्रिया च यज्ञं समर्द्धयति य एवं वेद ॥ १२ ॥

यः सुब्रह्मण्य एवं यथोक्तप्रकारेण वेद जानाति सोऽस्य यजमानस्य यज्ञं ब्रह्मणा ऋग्यजुःसामात्मकेन वेदेनैव च श्रिया अन्नपशुपुत्रादीनां समृद्धया च समर्द्धयति समृद्धं करोति ॥ १२ ॥

पुनरपि सुब्रह्मण्यां प्रशंसति—

अथो खल्वाहुर्यच्चावगतं यच्चानवगतं सर्वस्यैषैव प्रायश्चित्तिरिति तस्मादेवंविदं सुब्रह्मण्यं कुर्वीत नानेवंविदम् ॥ १३ ॥

अथो इत्यवान्तरवाक्योपक्रमार्थम् । आहुः खलु प्रायश्चित्तविदः । यद्-यज्ञे यच्च यदपि अवगतम् अन्यथा ज्ञातम् । यच्च अनवगतम् अपरिज्ञातम् । तस्य सर्वस्यैषैव प्रायश्चित्तिः । विदुषा सुब्रह्मण्येन कृतं सुब्रह्मण्याह्वानमेव प्रायश्चित्तम् । तस्मादेवंविदं यथोक्तप्रकारेण ज्ञातारं ब्राह्मणं सुब्रह्मण्यं कुर्वीत यजमानः । अनेवंविदं न कुर्वीत इति ॥ १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

3. Bh JA. om. अयमेव.

4. BIS. अनो० for यो०, M. य एतदनो युक्तम् for यो युक्तम्.

10. Bh MT सुब्रह्मण्यं for सुब्रह्मण्यां.

12. Bh. ०विधं for ०विदं.

13. RTIJSA ०क्रमार्थः for ०क्रमार्थम् ; JA om. यद्यज्ञे.

14. R. यद्यपि for यदपि; JA. परिज्ञातं for अन्यथा ज्ञातं; R adds परिज्ञातं after अन्यथा ज्ञातं; Bh om. अपरिज्ञातं; KM. परिज्ञातं for अपरिज्ञातं.

16. Bh T ०विधं for ०विदं; Bh. om. सुब्रह्मण्यं.

17. R. अन्यथा एवं, Bh AT. अन्यथैवंविदं for अनेवंविदं; SK add अन्यम् before अनेवं.

# तृतीयः खण्डः

अथ सर्वयज्ञव्याप्तानि विज्ञातव्यानि दर्शयितुं प्रथमं प्रातःसवने विज्ञेयं दर्शयति—

**एकच्छन्दः प्रातःसवनं तस्मादेकपात् पुरुषो हरत्यन्यं प्रत्यन्येन तिष्ठति ॥ १ ॥**

प्रातःसवनमेकच्छन्दः एकं गायत्रमेव छन्दो यस्य तत् तथोक्तम् । बहिष्पवमानीयानाम् आज्यस्तोत्रीयाणां च ऋचां सर्वासामपि गायत्रच्छन्दस्कत्वात् । तस्मात् तत एव पुरुष एकपाद् भवति । कथमेकपात् पुरुषः ? द्विपाद्धि सर्वत्र दृश्यते । श्रूयते च द्विपाद्वै पुरुषः (ऐ. ब्रा. ५. २३. २) इति । अत[एवम]उक्तम् यद्यपि द्विपात् पुरुषः तथापि पथि गच्छन् अन्यमेकं पादमन्यत्र पुरोदेशे हरति प्रक्षिपति अन्येनैकेन पादेन भूमौ प्रतितिष्ठति । अत एकपात् पुरुष इति ॥ १ ॥

अथ माध्यंदिने सवने विज्ञेयं दर्शयति—

**त्रिच्छन्दा माध्यंदिनः पवमानस्तस्मात् त्रयोऽधःप्राणाः॥ २॥**

माध्यंदिनो मध्यंदिनसवनसंबन्धी पवमानः त्रिच्छन्दाः त्रीणि गायत्रीबृहतीत्रिष्टुबाख्यानि छन्दांसि यस्य सः तथोक्तः । तस्मात् तत एव

---

2. BK Bh ०यज्ञस्याप्तानि, RJA ०यज्ञस्य for ०यज्ञव्याप्तानि; RJA. विज्ञेयानि for विज्ञातव्यानि.

4. M. एकं for एक०.

6. M. om. एकं; M. एकं for एव.

7. BMAK बहिष्पवमानिनाम्, बहिष्पवमानम् for बहिष्पवमानीयानाम; Bh A add भवति after सर्वासां; MIS ०च्छन्दस्त्वात्, K. ०छन्दस्त्वात् for ०छन्दस्कत्वात्.

10. RB Bh JA add इति after अतः; JA अयुक्तम् for उक्तम; RSI. अन्यम् for अग्रम्.

11. Bh (ऐ) कैकेन पादेन for (ए) केन पादेन.

15. Bh MJA माध्यं० for मध्यं०.

16. Bh JA om. तस्मात्...अधः.

पुरुषस्य अधः अवाञ्चः प्राणास्त्रयः । एको मूत्रविसर्जनस्य हेतुः । अपरः पुरीषविसर्जनस्य । अन्यो रेतोविसर्जनस्य इति । त्रयोऽवाञ्चो रेतस्यो मूत्र्यः पुरीष्य (ऐ. आ. १. ४. ३.) इति श्रुतेः ॥ २ ॥

तत्रैव विज्ञेयान्तरमाह--

**द्वे गायत्र्यां सामनी । तस्माद् द्वयमधरेण प्राणेन करोति ॥ ३ ॥**

माध्यंदिने पवमाने गायत्र्यां गायत्रीछन्दस्कायाम् ऋचि द्वे सामनी गायत्र्यामहीयवनामधेये क्रियेते । तस्मात् तत एव द्वयं मूत्रविसर्जनं पुरीषविसर्जनं चेत्येतद् द्वयम् अधरेण अधोवर्तिना प्राणेन करोति पुमान् । यद्यपि रेतोविसर्जनं तृतीयमपि कर्म अधरेण प्राणेन करोति तथापि रेतोमूत्रयोरेकीकरणेन द्वयमधरेण करोतीत्युच्यते ॥ ३ ॥

तत्रैव विज्ञेयान्तरमाह—

**द्वे बृहत्यां सामनी । तस्माद् द्वयमुत्तरेण ॥ ४ ॥**

बृहत्यां बृहतीछन्दस्कायामृचि द्वे सामनी रौरवयौधाजयनामधेये क्रियेते । तस्मात् तत एव द्वयं प्राणनमपाननं चेत्येतद् द्वयम् उत्तरेणोर्ध्ववर्तिना प्राणेन करोति पुमान् ॥ ४ ॥

---

1. T. अथ अर्वाञ्चः for अधः अवाञ्चः; T. adds एव after त्रयः

2. Bh JA (अ) र्वाञ्चो० for (अ) वाञ्चो०; Bh JA रेतसः मूत्रपुरीषः for रेतस्यो...

3. M. मूत्रीयः for मूत्र्यः.

4. Bh JA विज्ञाना० for विज्ञेया०.

5. M. adds करोतीत्युच्यते । after अधरेण.

8. R Bh J नामनी for ०नामधेये; AM प्राणनमपाननं, Bh. प्रीणनमवयाननं for मूत्रविसर्जनं पुरीषविसर्जनं.

9. Bh A चेत्येव च द्वयमुत्तरेणोर्ध्ववर्तिना प्राणनं for चेत्येतद् ०... करोति; S आसन०, BI आसवन० for अधो०; Bh om. पुमान्.

10. BI विसर्जनीयं for विसर्जनं M. om. तथापि.

14. M. एकं सामौशनाख्यं क्रियते for द्वे सामनी...क्रियेते.

15. M. om. तत एव द्वयं...तत एव (p. 21 L. 4) T. प्रीणनम् for प्राणनम्.

विज्ञेयान्तरमाह—

**एकं त्रिष्टुभि साम । तस्मादेकैव नाभिः ॥ ५ ॥**

तत्रैव त्रिष्टुभि त्रिष्टुप्छन्दस्कायाम् ऋचि एकं सामैशनाख्यं क्रियते । तस्मात् तत एव एकैव नाभिः । नाभिरिव मध्यवर्ती प्राणः । नव वै पुरुषे प्राणाः । नाभिर्दशमी (तै. ब्रा. १. ३. ७. ४) इति श्रुतेः । स तु एक एव । इतरप्राणवत्तस्य वृत्तिभेदाभावात् ॥ ५ ॥

नाभेः किं कर्मेत्यत्राह—

**प्राणानामिव तु विधृतिः ॥ ६ ॥**

नाभिस्तु प्राणानामूर्ध्वाधोभागवर्तिनामुभयेषामपि विधृतिर्विधारिका । यथा इतरप्राणानां प्राणधारणादन्यत् कर्मास्ति तद्वदस्य कर्मान्तरं नास्ति । किंतु प्राणधारणमेकमेव कर्मेत्यभिप्रायः ॥ ६ ॥

एवं पुरुषविधस्य यज्ञस्य प्रातःसवनं पादस्थानीयम् । प्राणस्थानीयो माध्यंदिनः पवमानः एव इत्यभिहितम् । अथेदानीं तत ऊर्ध्वं क्रियमाणानि चत्वारि स्तोत्रीयाणि किमात्मकानीत्यत्राह—

**अथ यदेव तत ऊर्ध्वं तानि पृष्ठानि ॥ ७ ॥**

अथ पुनः ततो माध्यंदिनात् पवमानात् ऊर्ध्वं यदेव स्तोत्रं क्रियते । यच्छब्देन सर्वस्तोत्राणां सामान्येन निर्देशात् यानि स्तोत्राणि क्रियन्ते इत्यर्थः । तानि पृष्ठानि—पृष्ठं मध्यदेहस्य पश्चाद्भागः । तत्स्थानीयानि ॥ ७ ॥

कथमित्यत्राह—

**बार्हतान्येकगायत्रीकाणि । तस्माद् बृहत्य एव पर्शवो बृहत्य एव कीकसाः पृष्ठमभिसमायन्ति ॥ ८ ॥**

---

1. Bh. विज्ञातव्या॰ for विज्ञेया॰

4. Bh JA om. नाभिरिव; MT. add नाभिः after (इ)व; M. मध्यं प्राण [न]म् for मध्यवर्ती प्राणः.

9. BT om. ॰भाग॰.

11. Bh. प्रमाणम् for प्राणधारणम्.

12. T. om. प्रातःसवनं; Bh KT. ॰सवनीयं for ॰सवनं; Bh JA. om. पादस्थानीयं.

20. Bh T. om. बृहत्य एव पर्शवो॰.

21. RSh परिशवो॰ for पर्शवो॰.

तानि पृष्ठानि बार्हतानि बृहतीषु भवानि । तत्र बृहद्रथन्तरयोर्बृहतीप्रमुखत्वात् श्यैतनौधसकालेयानां पुनर्बृहतीष्वेवोत्पन्नत्वात् । किंच । तान्येकगायत्रीकाणि । वामदेव(व्य ?)नामकस्यैकस्य साम्नो गायत्र्यामुत्पन्नत्वात् । यस्मादेवं तस्मात् पुरुषे पर्शवः पार्श्वास्थीनि बृहत्य एव भूयस्यो बृहत्यः पार्श्वास्थिस्थानीयाः । तथा बृहत्य एव कीकसाः पृष्ठास्थ्यवयवाः तत्स्थानीयाः । पृष्ठमभिसमायन्ति । पृष्ठस्थानीयामेकां गायत्रीं समागच्छन्ति ॥ ८ ॥

तत ऊर्ध्वं क्रियमाणं किमात्मकमित्यत्राह—

**अथ यदेव तत ऊर्ध्वं स आर्भवः पवमानः ॥ ९ ॥**

अथ पुनः ततो माध्यंदिनात् पवमानादूर्ध्वं यदेव क्रियमाणं स्तोत्रं स आर्भवः पवमानः । पुरुषविधस्य यज्ञस्य मुखं भवति । मुखे संभूतत्वादित्यर्थः ॥ ९ ॥

मुख्यानां गायत्र्यादीनां प्राणादिरूपतामाह—

**प्राणो गायत्री श्रोत्रे उष्णिक्ककुभौ वागनुष्टुप् चक्षुर्जगती ॥ १० ॥**

मुखरूपे आर्भवपवमाने विद्यमाना गायत्री प्राणस्थानीया । प्राणापानव्यानैस्त्रिवृत्प्राणः । गायत्र्यपि त्रिपदेति गायत्र्याः प्राणसाम्यम् । उष्णिक्ककुभौ श्रोत्रे । अनुष्टुप् वाक्स्थानीया । वाग्वा अनुष्टुप् (श. ब्रा. १.३.२.१६) इति श्रुतेः । जगती चक्षुः ॥ १० ॥

यदत्रानुदाहृतमक्षरपङ्क्त्यादिकं विकृतिषु क्रियमाणं छन्दस्तत् किमात्मकमित्यत्राह—

---

3. R Bh JA add: बृहत्य एव कीकसाः पृष्ठमभिसमायान्तीति तानि पृष्ठानि बार्हतानि after ०गायत्रीकाणि.

4. T. परिशवः for पर्शवः; Bh. om. बृहत्य एव...तत्स्थानीयाः.

5. JA. पार्श्वास्थीनि for पार्श्वास्थिस्थानीयाः; R Bh KSJB पृष्ठस्या० for पृष्ठास्थ्य०.

9. R. दिन० for ०दिनात्, Bh. ०दिनः पवमानः पवमानात्, TJA ०दिनपवमानात् for ०दिनात् पवमानात् .

12. BSI. ०रूपताद्या० for रूपता०.

15. SI. आर्भवे for आर्भव०.

19. R. अतो० for अत्रा०; RA add अनुक्तम् before अनुदाहृतं; R. ०पङ्क्तयादि, Bh पङ्क्तयादिषु for पङ्क्तयादिकं.

पुष्टिर्यदन्यत् ॥ ११ ॥

यदन्यदुदाहृतेभ्यो व्यतिरिक्तमक्षरपङ्क्त्यादि तत् पुष्टिः गायत्र्यादीनां मुख्यानामपि पुष्टिहेतुः ॥ ११ ॥

एवं छन्दोविभागं दर्शयित्वा इदानीं साम्नां विभागं दर्शयति—

द्वे गायत्र्यां सामनी । तस्माद् द्वयं प्राणेन करोति । प्राणिति चापानिति च । एकं छन्दः ककुबुष्णिहौ द्वे सामनी । तस्मात् समानं सत् श्रोत्रं द्वेधैव शृणोति । द्वे अनुष्टुभि सामनी । तस्माद् द्वयं वाचा करोति । सत्यं चानृतं च वदति । एकं जगत्यां साम । तस्माद् द्वे अक्षिणी सती समानं पश्यतो न हि पश्चादायन्तं पश्यति ॥ १२ ॥

गायत्र्याम् ऋचि द्वे गायत्रसंहिताख्ये सामनी क्रियेते । तस्मात् पुरुषः प्राणेन द्वयं प्राणनमपाननं च करोति । तस्यैव विवरणम् । प्राणिति चापानिति चेति । ककुबुष्णिहौ द्वे अपि एकमेव छन्दः । द्वयोरपि अष्टाविंशत्यक्षरात्मकत्वात् । तत्र ककुभि द्वौ प्रथमतृतीयौ पादावष्टाक्षरौ मध्यमः पादो द्वादशाक्षरः । उष्णिहि तु प्रथमद्वितीयावष्टाक्षरौ तृतीयो द्वादशाक्षर इति विशेषः । तत्र द्वे सफपौष्कलाख्ये सामनी क्रियेते । तस्मात् पुमान् समानम् ऐक्ये सत् श्रोत्रम् एकेनैव श्रोत्रेन्द्रियेण द्वेधैव द्विधैव पुरस्तात् पश्चाच्च शृणोति । अनुष्टुभि द्वे श्यावाश्वान्धीगवनामके सामनी भवतः । तस्मात् पुरुषो द्वयं सत्यमनृतं चैकया वाचा करोति वदति ।

---

3. BTSI om. अपि.

5 6&8. TSK साम्नी for सामनी.

6. Sh K एक० for एकं.

7. Bh. समानसस्थं for समानं सत् श्रोत्रं; RT. द्वेधेव for द्वेधैव.

13. A Bh. repeat द्वे अपि एकमेव.

17. KM ऐक्यं, JA Bh. अन्येन for ऐक्ये; R. द्वेधेव द्विधेव for द्वेधैव द्विधैव.

18. B पुरस्ताच्च for पुरस्तात्; Bh MK. ०गवानामेके for गवनामके.

19. Bh MJA om. (ए)कया.

तस्यैव विवरणम् । सत्यं चानृतं च वदतीति । जगत्यां कावाख्यम् एकं साम भवति । तस्माद् अधिष्ठानभेदाद् अक्षिणी द्वे सती समानम् अवैलक्षण्येन पुरस्तादायन्तं पदार्थं पश्यतः । करणे कर्तृत्वोपचारः । न तु पश्चात् पृष्ठत आयन्तं भावं चक्षुषा पुमान् पश्यति । श्रोत्रेण यथा पृष्ठतः शब्दं शृणोति न तद्वदित्यर्थः ॥ १२ ॥

अवशिष्टस्य यज्ञायज्ञीयस्य मूर्धात्मकत्वं दर्शयति—

**अथ यदेव तत ऊर्ध्वं मूर्धा तद्यज्ञायज्ञीयम् ॥ १३ ॥**

अथ पुनः ततो यथोक्तेभ्यो गायत्र्या(त्रा?)दिभ्यः सामभ्यः ऊर्ध्वं यदेव साम भवति तद्यज्ञायज्ञीयम् मूर्धा पुरुषविधस्य यज्ञस्य शिरस्थानीयम् । उत्तमत्वात् ॥ १३ ॥

यथोक्तं यज्ञायज्ञीयविदं स्तौति—

**मूर्धा स्वानां भवति य एवं वेद ॥ १४ ॥**

यः पुमान् एवं यज्ञायज्ञीयं मूर्धानं वेद स स्वानां ज्ञातीनां मध्ये मूर्धा श्रेष्ठो भवति ॥ १४ ॥

एतदेव विवृणोति—

**अध इव वा अन्यान्यङ्गान्युपरीव मूर्धा अध इवास्मादन्ये स्वा भवन्त्युपरीव स्वानां भवति । य एवं वेद ॥ १५ ॥**

मूर्ध्नोऽन्यान्यङ्गानि अध इव वै अधस्तादेव भवन्ति खलु । मूर्धा तु एषामुपरीव उपर्येव भवति । यः पुमानेवं यज्ञायज्ञीयं मूर्धानं वेद अस्माद्

---

1. Bh. om. एव.
2. JA. तस्याधिष्ठानम् । तदा अक्षिणी for तस्माद. . .अक्षिणी.
3. J. om. पदार्थं.
5. RBSIK add: नहि पश्चादायन्तं पश्यतीति after इत्यर्थः
6. RS मूर्धात्मतां for मूर्धात्मकत्वं.
8. J. तथान्ते, Bh A तथान्तो० M. तथां for ततो०.
9. Bh JA om. एव; T संभवति for भवति.
11. RSTK यथोक्त for यथोक्तं; J. ०विदः for विदं.
12. S. adds. यः पुमानेवं वेदेति after एवं वेद.
16. MTSIK. अथ० for अध० Bh MSK. अथ० for अध०.
18. M. om. तु.

एवंविदुषोऽन्ये स्वा ज्ञातयोऽध इव अधरा एव भवन्ति । विद्वांस्तु स्वानां ज्ञातीनामुपरीव श्रेष्ठ एव भवति ॥ १५ ॥

अथ यज्ञप्रतिपादकस्य वेदस्यार्थतो विज्ञानं तत्प्रवचनं च प्रशंसति—

**यज्ञो वा अथ जज्ञ इत्याहुरेष वाव जात एषोऽवलुप्तजरायुरेष आर्त्विजीनो य एतं वेदमनुब्रूते यदा वा एतं वेदमनुब्रूते, अथ हैनं शृण्वन्त्यसावन्ववोचतेति तद्धै स जायते ॥ १६ ॥**

अथशब्दो वाक्यादौ समवैति । यज्ञो वै जननहेतुत्वाज्जज्ञः । अयमेव यज्ञ इति परोक्षं नाम आहुः । तद्विदो व्यवहरन्ति । यः पुमान् एतं यज्ञप्रतिपादकं वेदं विदित्वा अनुब्रूते प्रवचनं करोति एष वाव अयमेव खलु जातः सफलजन्मा भवति । अन्यस्तु जातोऽप्यजातप्राय इत्यभिप्रायः । किं च एषोऽयमेव अवलुप्तजरायुः अवलुप्तं जरायुः गर्भवेष्टनं तत्स्थानीयमाच्छादकं वेद । तदर्थविषयमज्ञानं जरायुशब्देन विवक्षितम् । तदवलुप्तं यस्य स तथोक्तः । किं च । एषोऽयमार्त्विजीनः ऋत्विक्कर्मार्हः । अनुष्ठानस्य ज्ञानपूर्वकत्वात् । अपि च यदा वै यस्मिन् एव काले एवं यज्ञप्रतिपादकं वेदमनुब्रूते । अथ ह तदेव एतमनुब्रुवाणं शृण्वन्ति । असावन्ववोचतेति सम्यगनु-

---

1. R BBh JA एव for एवं.

4. R Bh BJIA अध for अथ; R BBh JSIA Sh Ms. यज्ञो० for जज्ञ;

5. Bh. यज्ञ० for वेद०.

6. Bh JA om. हा.

8. RSI समन्वेति for समवैति ; BBh JA यज्ञः; for जज्ञः.

9. JA यज्ञम् for परोक्षं नाम; M परोक्ष० for परोक्षं ; BBh. MSIA एवं for एतं.

10. MTIJ वा for वाव.

12. R. तत्स्थानम्, Bh A तत्संस्थानम् for तत्स्थानीयम्.

13. B वेदार्थ०, M वैतदर्थं, I वेदार्थे for वेद तदर्थ०.

14. Bh JA एष त्वेव० for एषोऽय०

15. Bh JA om. एवं.

16. R. तथैव, BMIK तदेव for तदैव; Bh A एवम् for एतम्.

वचनमकार्षीदिति । प्रसृतकीर्तिर्भवतीत्यर्थः । तद्वै यदा अयं विख्यातो भवति तदा खलु सोऽनुवक्ता जायते पुण्यजन्मा भवति ॥ १६ ॥

यज्ञेषु प्रातःसवनादिषु बहुषु प्रदेशेषु गायत्र्यादीनां छन्दसां न्यूनाक्षरत्वमस्ति । तत्र प्रातःसवने सामान्येन गायत्र्या ऊनाक्षरत्वं स्तौति—

**ऊनाक्षरा गायत्री प्रातःसवने प्रजानां प्रजात्या ऊनादिव हि प्रजाः प्रजायन्ते ॥ १७ ॥**

प्रातःसवने गायत्री ऊनाक्षरा । तद्यथा—बहिष्पवमाने उपास्मै गायता नरः (सा. ६५१) इत्येषा गायत्री ऊनाक्षरा । पवमानायेन्दवे (सा. ६५१b) इति द्वितीयपादस्य सप्ताक्षरत्वात् तथा तत्रैव दविद्युतत्या रुचा (सा. ६५४) इत्येषा गायत्री न्यूनाक्षरा । तथा आज्येष्वपि होतुराज्ये तं त्वा समिद्भिरङ्गिरः (सा. ६६१) इत्येषा गायत्री । तत्र बृहच्छोचा यविष्ठ्य (सा. ६६१c) इति तृतीयः सप्ताक्षरः । तथा आनो मित्रावरुणा (सा. ६६३) इत्ययं पादः सप्ताक्षरः । अच्छावकान्त्येऽपि इन्द्राग्नी आगतं सुतम् (सा. ६६९) इत्येषा गायत्री । तत्र गीर्भिर्नभो वरेण्यम् (सा. ६६९b) इति द्वितीयः पादः सप्ताक्षरः । एवमन्यदपि उदाहार्यम् । एतद् गायत्र्या ऊनाक्षरत्वं प्रजानां प्रजात्यै प्रजननाय भवति । तथा हि लोके प्रजाः सर्वाः ऊनादिव न्यूनादेव देशात् परिच्छिन्नदेशादेव प्रजायन्ते १७ ॥

---

3. Bh MJA om. प्रातःसवनादिषु बहुषु; Bh MJA add य० before प्रदेशेषु

4. RBJ ऊना० for न्यूना०; MA सवन० for सवने.

7. M. om. बहिष्पवमाने.

8. Bh JA add प्रातःसवने प्रजानां प्रजात्यै before पवमानायेन्दवे.

12. RBSI add तथा स नः पृथु श्रवाय्यं बृहदग्ने सुवीर्यं (सा. 662 a&c) after सप्ताक्षरः ।

13. Bh MT. मैत्रा० for मित्रा० ; JA अच्छावकस्यापि for अच्छावकान्त्येऽपि.

15. BMIS. om. पादः.

16. BIS उदाहरणीयम for उदाहार्यम्.

17. RJA add गुह्यप्रदेशात् after ऊनादिव.

एवं सामान्यतः प्रातःसवने गायत्र्या न्यूनाक्षरत्वं प्रदर्श्य इदानीं तत्रैवामहीयवे गायत्र्या न्यूनाक्षरत्वं स्तौति—

**ऊनाक्षरा गायत्र्यामहीयवे प्रजानां प्रजात्या ऊनादिव हि प्रजाः प्रजायन्ते ॥ १८ ॥**

आमहीयवे साम्नि गायत्री न्यूनाक्षरा। तद्यथा–उच्चा ते जातमन्धसः (सा.४६७) इत्येषा गायत्री न्यूनाक्षरा। दिवि सद्भूम्या ददे (सा.४६७$_b$) इति द्वितीयस्य सप्ताक्षरत्वात्। तथा एना विश्वान्यर्य आ (सा. ५९३) इत्येषापि। आद्यद्वितीययोः सप्ताक्षरत्वात्। प्रजानाम् इत्यादि पूर्ववत्॥ १८॥

माध्यंदिने सवने पृष्ठेषु वामदेव्ये गायत्र्या ऊनाक्षरत्वं स्तौति—

**ऊनाक्षरा गायत्री पृष्ठेषु वामदेव्ये यजमानलोक एव स मध्ये हि यज्ञस्य यजमानः ॥ १९ ॥**

पृष्ठेषु स्तोत्रेषु वामदेव्ये साम्नि अभीषुणः सखीनाम् (सा. ६८४) इत्येषा गायत्री न्यूनाक्षरा। त्रयाणामपि पदानां सप्ताक्षरत्वात्। तथा सति यजमानलोक एव यजमानस्थान एव न्यूनता भवेत्। अन्यैश्चानाक्रान्ते एव हि देशे यजमानस्तिष्ठति। न त्वन्यैराक्रान्ते। अतः तत्स्थाने गायत्र्या न्यूनाक्षरत्वं गुण एव। वामदेव्यस्य यजमानस्थानत्वोपपादनम्। तथा हि—यदा यज्ञस्य मध्ये वामदेव्यं क्रियते स यजमानश्च तदानीं यज्ञस्य मध्ये[हि] एव वर्तत इति॥ १९॥

तृतीयसवन आर्भवपवमाने संहितसाम्नि गायत्र्या न्यूनाक्षरत्वं प्रशंसति—

**ऊनाक्षरा गायत्री संहिते प्राणापानयोः उच्चार ऊनादिव हि प्राणापानावुच्चरतः ॥ २० ॥**

---

1. Bh JA प्रशस्य for प्रदर्श्य.

2. JA तत्रैवामहीयवं for तत्रैवामहीयवे; J गायत्र्यां साम भवति; A गायत्र्यां यौधाजयं च साम भवति for गायत्र्या...स्तौति

12. R. om. पृष्ठेषु...न्यूनता भवेत् (L. 14)

14. RBMSI अन्यैरना॰ for अन्यैश्चना॰.

15. Bh. ॰रज्ञाते for ॰राक्रान्ते.

16. R. ॰चारः for ॰पादनम्; Be. MJA om यदा.

संहितनामधेये साम्नि वरिवोधातमो भुवः (सा. ६९१) इत्येषा गायत्री न्यूनाक्षरा। पर्षि राधो मघोनाम् (सा. ६९१c) इति तृतीयस्य सप्ताक्षरत्वात्। यदेतन्न्यूनाक्षरत्वं गायत्र्यास्तत् प्राणापानयोरुच्चारे संचरणे तन्निमित्तमेव भवतीत्यर्थः। तथा हि—प्राणापानावूनादिव परिच्छिन्नादेव नासाविवराद् उच्चरतः संचरतः। अतो न्यूनाक्षरत्वं प्रशस्तम् इत्यर्थः ॥ २० ॥

तत्रैव यज्ञायज्ञीये, सतो बृहत्या न्यूनाक्षरत्वं स्तौति—

**ऊनाक्षरं यज्ञायज्ञीयं प्राणानामुत्सृष्ट्यै ॥ २१ ॥**

यज्ञायज्ञीयं साम ऊनाक्षरम्। तदीयप्रगाथे ऊर्जो नपातम् (सा. ७०४) इत्येषा सतो बृहती न्यूनाक्षरा। तृतीयपादस्यैकादशाक्षरत्वाच्चतुर्थस्य सप्ताक्षरत्वात्। ततः तत्र गीयमानं यज्ञायज्ञीयं न्यूनाक्षरमित्युच्यते। तदेतन्न्यूनत्वं प्राणानामुत्सृष्ट्यै भवति। स्वावकाशप्रदेश एव प्राणानां गतिर्नान्यत्रेति न्यूनाक्षरत्वं गुण एव ॥ २१ ॥

तदेतत्सोदाहरणमुपपादयति—

**यो हि पूर्णमुपधमेद्यदि प्रतीयाद्विपदेद् यदि न प्रतीयाद्विष्यन्देत ॥ २२ ॥**

यो हि पुमान् लोके नालाद्यन्तर्गततृणाद्यपनयनायोदकपूर्णं करकादिकं यद्युपधमेत् यदि च तदुपधमनं प्रतीयात् प्रतिगच्छेत् तर्हि स उपध्माता

---

2. RJA add अत्र after इति.

3. RSM रुच्चारः for ॰रुच्चारे; MTK संचरेण for संचरणे.

8. BMIA ॰प्राणार्थे, S ॰प्राणनार्थे; Bh ॰प्रमाथो, T ॰प्रमाणार्थे for प्रगाथे.

10. Bh JA न्यूनम्, MT न्यूनाक्षरत्वम् for न्यूनाक्षरम्.

11. M. न्यूनाक्षरत्वं for न्यूनत्वं; R सावकाश॰ for स्वावकाश॰, Bh य एवकारा प्रकारा, KT. [स्वा]वकाशप्रकश॰, JA एवंप्रकारा for स्वावकाशप्रदेश॰; Bh adds च and J यत् after एव.

14. T पुण्य॰ for पूर्ण॰; MT ॰यमे॰, SK ॰यन्ये॰ for ॰धमे॰.

16. J om. यो हि पुमान्...गायेदित्यर्थः (p. 29. L. 5)

17. Bh A न हि for तर्हि.

विदेपत् विपन्नो भवति । ०्यर्थप्रयासो भवतीत्यर्थः । यद्युपधमनं न प्रतीयत् । न कुर्यादित्यर्थः । तर्हि विष्यन्देत करकादिनाल्शुद्धेरभावादभीष्टादुदपानादेर्हीयेतेत्यर्थः । तस्मादपूर्णमेव करकादिकं तृणाद्यपनयनायोपधमेत् । तथा सति वायोः संचरणात् तृणापनयो भवति । तद्वदत्रापि न्यूनाक्षरमेव यज्ञायज्ञीयं प्राणानामुत्सृष्टयै गायेदित्यर्थः ॥ २२ ॥

त्रिष्वपि सवनेषु गायत्र्या न्यूनाक्षरत्वं समानं प्रशंसति—

**तदाहुः सवनानां च वा एत उदानाः प्राणानां चोत्सृष्टिरिति ॥ २३ ॥**

तत्रैवमाहुर्ब्रह्मवादिनः—सवनानां वै सवनानामेव खलु एते गायत्र्यादिरूपाः प्राणाः उदानाः संचारहीनास्तिष्ठन्ति । तेषां सवनत्रयसंबन्धिनां गायत्र्यादीनां न्यूनाक्षरत्वेन प्राणानामुत्सृष्टिरेव भवतीति ॥ २३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे
प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

---

1. R om. व्यर्थप्रयासो भवति; A यथो० for यद्यु०.

2. Bh A न हि for तर्हि; B विष्ग०, Bh M विश्व०, T विष्व०, A विष्ट० for विष्य० ; BS ०ध्माते० for ०शुद्धे० ; Bh A नाल्शु (A श्व) राद्धे (A द्धे) मावर्तं (A तें) for नाल्शुद्धेरभावा०.

3. MTK ०हींयते for ०हींयेत.

6. M. गायत्र्यां for गायत्र्या.

# चतुर्थः खण्डः

ज्योतिष्टोमे सुत्येऽहनि प्रातरनुवाकात् पूर्वं विश्वरूपागानं विधातुं तत्र किंचित् प्रकारमादौ विधत्ते—

**अध्वर्यवित्याहोद्गाता मा स्म मेऽनिवेद्य होत्रे प्रातरनुवाकमुपाकरोरिति ॥ १ ॥**

हे अध्वर्यो ! मे मह्यमुद्गात्रे मानिवेद्य निवेदनमामन्त्रणमकृत्वा होत्रे प्रातरनुवाकं शस्त्रं मा स्मोपाकरोः उपाकरणं मा कार्षीरित्युद्गाताध्वर्युं प्रति आह वदेदित्यर्थः । इतिशब्दोऽवान्तरवाक्यपरिसमाप्तिद्योतनार्थः । तथा च द्राह्यायणः—न मामनामन्त्र्य प्रातरनुवाकमुपाकुर्यादित्यध्वर्युं ब्रूयात् (२. ४. ७; ला. १. ८. ६) इति ॥ १ ॥

ततः किमित्यत्राह—

**सोऽध्वर्युः प्राह ॥ २ ॥**

स एवमुद्गात्रोक्तोऽध्वर्युः प्राह प्रातरनुवाकोपकरणात् पूर्वम् एवामन्त्रयेदित्यर्थः ॥ २ ॥

ततः किं कुर्यादुद्गातेत्यत्राह—

**स हूतो व्रजति स पूर्वया द्वारा हविर्धाने प्रपद्यते ॥३॥**

स उद्गाता हूतः अध्वर्युणामन्त्रितः सन् व्रजति हविर्धानमण्डपं गच्छेत् । गत्वा च स पूर्वया द्वारा हविर्धानमण्डपस्य पूर्वेण द्वारेण हविर्धाने सोमात्मकस्य हविषः आधारभूते द्वे शकटे प्रपद्यते प्रपद्येत ॥ ३ ॥

---

2. K. ०वाकपूर्वं for ०वाकात् पूर्वं.

8. KTMS om. ०परि०.

14. J एनम् for एव; Bh तमाश्रयेत, J. आश्राक्येत, A [ए]नमाश्रयेत MT. मन्त्रयेत् for (आ)मन्त्रेयत्.

17. R. trans व्रजति after ०मण्डपं ; Bh IS om. हविर्धान०...द्वारेण.

19. R. om. प्रपद्यते; R. प्रपद्येते for प्रपद्येत; Bh MJSI om. प्रपद्येत.

अत्र हविर्धानद्वयं प्राप्तस्योद्गातुः सनियमं विश्वरूपागानं विधत्ते—

**स दक्षिणस्य हविर्धानस्योत्तरं चक्रमभ्यपश्रयमाण उदङ्ङासीनो विश्वरूपा गायति ॥ ४ ॥**

ततः स उद्गाता दक्षिणस्य दक्षिणतः स्थितस्य हविर्धानस्य शकटस्य उत्तरं चक्रम् अभ्यपश्रयमाणः उदङ्ङासीनः उदङ्मुखो मन्त्रवर्जमुपविष्टो विश्वरूपाः विश्वरूपशब्दवतीः युञ्जे वाचं शतपदीं (सा. १८२९) इत्येतस्यां पङ्क्तौ गायत्रीकारं प्रगाथगानेनोत्पन्नास्तिस्रः स्तोत्रीयाः गायति । तथा च द्राह्यायणः—पूर्वया द्वारा प्रपद्यान्तरेण हविर्धाने पूर्वेण चक्रे उदङ्मुख उपविशेत्तूष्णीम् (२. ४. ९. ला. १. ८. ७.) इति । अस्यार्थः—पूर्वया द्वारा हविर्धानं प्रपद्य अन्तरेण हविर्धाने शकटयोर्मध्ये पूर्वेण चक्रे चक्रयोः पुरस्तादुदङ्मुखस्तूष्णीं स्तोत्रीयधर्ममात्रम् आस्ते । उपदेशनं हित्वा उपविशेदिति । विश्वरूपागानविधिर्न नित्यः । किंतु, षोडशिग्रहविधिवद् वैकल्पिकः । तथा चोपपादितं द्राह्यायणेन पूर्वोत्तरपक्षोपन्यासेन—विश्वरूपाणां गानं ज्योतिष्टोमे यजमानेनोक्तं प्रत्याचक्षीत । चतुष्टोमस्तोमसंपदतिरेकाद्ग्रहशस्त्राभावाच्च । वसतीवर्यो ग्रहः प्रातरनुवाकः शस्त्रमासां न च संपत्कोपो यथान्यैः परिसाममिः गायेति चेत् ब्रूयात् (२.४.६-७.) इति । अस्यार्थः—यजमानेन चोदितोऽपि उद्गाता विश्वरूपाणां गानं

---

1. JA अतः, M तद् for अत्र.

4. JA om. दक्षिणस्य,

5. Bh A मित्र० for मन्त्र०; JA ०विश्य for ०विष्टो.

7. Bh. गायत्रीप्रणवप्रग्रथनेन, M. गायत्रीगारं प्रगीयते नोत्पन्नाः, JA गायत्रीप्रगाथप्रप (A ०ग०) थनेन for गायत्रीकारं... ; JA Bh. ०त्पन्नानि स्तोत्रीयाणि for ०त्पन्नास्तिस्रः स्तोत्रीयाः.

8. Bh A प्रपद्योत्तरेण, SK. प्रतिपाद्यान्तरेण for प्रपद्यान्तरेण.

10. S. ०र्धाने for ०र्धानं; Bh SK प्रपाद्य for प्रपद्य; I. om. हविर्धानं प्रपद्यान्तरेण; M. पूर्वेण च तयोः for पूर्वेण...; TISK om. चक्रे.

11. R. स्तोत्रधर्मं मन्त्रवदुपवेशनं for स्तोत्रीयधर्ममात्रम्...देशनं; MTS. स्तोत्रीयं for स्तोत्रीय०.

14. JA om. ज्योतिष्टोमे.

15. Bh M. ०वर्योग्रहः for ०वर्यो ग्रहः.

17. KR. गायैवेति Bh MTA गायेवेति for गायेति.

प्रत्याचक्षीत न कुर्यात् । अन्यथा चतुष्टोमस्याग्निष्टोमस्य स्तोमानां त्रिवृत्पञ्चदशसप्तदशैकविंशानां तस्य नवतिशतं स्तोत्रीयाः (तां. ब्रा. १६. १. ८) इति ब्राह्मणेऽभिहितायाः संख्यायाः संपत्तेरतिरेकप्रसङ्गाद्विश्वरूपागाने तिस्रः स्तोत्रीया अतिरिच्येरन् इति । किं च । गानपक्षे ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् (तै. सं. ३.१.२.४) इति । स्तुतम(स्तुतमेव तद०?)नुशंसति (तां. ब्रा. ४. ९. १३) इति ग्रहशस्त्रयोरावश्यकत्वात् तयोरत्राभावाद्विश्वरूपागानं न कुर्यादिति गाननिषेधः । अथ तदुपपादनम् । वसतीवर्य एव ग्रहः । प्रातरनुवाक एव शस्त्रम् । आसामाभिर्विश्वरूपाभिः संपन्नत्वाद्विरोधोऽपि नास्ति । सोमस्य तद्देवतानां वा स्तुतेरभावात् । यथान्यैः संपद्विरोधो नास्ति तद्वत् । तस्मात्, हे उद्गातः त्वं विश्वरूपा गायेति यदि यजमानो ब्रूयात् तदा गायेदेव । न ह्यत्र यजमाननियोगः प्रधानम्, किंतु, यथोक्तग्रहशस्त्रक्लृप्तिः । तथा सति यदीच्छेत् तर्हि यजमानेनानुक्तोऽपि गायेदिति विवक्षितमिति । अतो विधिप्रतिषेधयोरुभयोरपि सूत्रकारेण दर्शितत्वात् वैकल्पिकोऽयं विधिरित्यवगम्यते ॥ ४ ॥

विश्वरूपागानं प्रशंसति—

---

3. Bh TIA संख्यासं० for संख्यायाः सं०; RS add सति after ०गाने; K. त्रिस्त्रिः for तिस्रः; JA. तु for तिस्रः.

4. Bh JA. प्रातरनुवाकमेकसूजासामाभिर्विश्वरूपाभिः संपन्नत्वादिव for गानपक्षे ग्रहं ; Bh JA अगृहीत्वा for गृहीत्वा.

6. RK. (ए)कस्यापि for (अ)त्र ; MT. (आ)दौ for (अ)भावात्.

7. JA तदनुप० for तदुप०

8. Bh आसाविति, JA आसामिति for आसामाभिः.

9. R. adds परिसामभिः after यथान्यैः.

10. Bh. ते, JA तद् for हे; JA उद्गातारं for उद्गातः; Bh. om. त्वं; MT तं for त्वं; Bh. गानं नयतीति for गायेति ; Bh JA. om. यदि ; JA. तदीयगाने for तदा गायेदेव.

11. M om. एव; Bh JA न तत्र for न ह्यत्र ; RSIK. शस्त्रादिकमपि for शस्त्रक्लृप्तिः ; RTKSI add च after तथा.

12. R Bh TJSIAK यदि for यदी०.

13. R Bh MJA ०निषेधयो० for प्रतिषेधयो०.

क्षत्रं वै स्तोत्रं विट् शस्त्रं क्षत्रेणैवास्मै विशमनु वीर्यमनु वर्त्मानं करोत्यथो स्तुतशस्त्रयोरेव समारम्भायाव्यवसंस्राय संतत्यै ॥ ५ ॥

प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रं, क्षत्रं वै क्षत्रमेव । यागरक्षाहेतुत्वात् । अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रं विट् । यागसंपद्धेतुत्वात् । यद् विश्वरूपा गायति इति, तत् अस्मै यजमानाय क्षत्रेण विशमनु पुष्टिमनुसृत्य वीर्यमनु वर्त्मानं संततगामिनं करोति । अथो अपि च स्तुतशस्त्रयोरेव समारम्भाय सम्यगुत्पत्तये एव अव्यवस्रंसाय अविच्छेदाय संतत्यै च विश्वरूपागानं भवति ॥ ५ ॥

विश्वरूपागानस्य कर्तृविशेषप्रदर्शनात् परीक्षया कर्तव्यतां द्रढयति—

एतद्ध स्माह ग्लावो मैत्रेयः प्राह्णे वा अद्याहं पापवसीयसं व्याकरिष्यामीति स ह स्म सदस्येवोपवसथ्येऽहन्युदङ्ङासीनो विश्वरूपा गायति ॥ ६ ॥

मित्रयुसुतो ग्लावो ग्लावनामा कश्चिदृषिः एतद्वक्ष्यमाणमाह उक्तवान् किल । अद्य प्राह्णे वै प्रातरेव । पापवसीयसं व्याकरिष्यामीति इदं श्रेष्ठमिदमश्रेष्ठमिति विभागं करोमीति । एवमुक्त्वा स ग्लावः उपवसथ्ये अग्नीषोमीयेऽहनि

---

5. Bh KJA यदि, MT यद्यपि, S यदपि for यद्.

6. R Bh JA गायेत् MT गायत्रे for गायति; TJA om. इति; R. यत् for तत्; JA ०सृज्य for ०सृत्य.

7. Bh MSI ०गामी for ०गामिनं; Bh. माङ्गीकरोति for करोति; M. om. करोति

8. S. adds अस्य after सम्यग्; A उपपत्तये for उत्पत्तये; MSI add च after अविच्छेदाय.

10. RSI ०दर्शनेन, for ०दर्शनात्; RSI प्रशंसया, A परीप्सया for परीक्षया.

12. TSIK om. स ह स्म...व्याकरिष्यमीति (L. 15)

15. Bh JA अश्रेष्ठमन्यत् for इदं श्रेष्ठम्; R. श्रेष्ठम् for अश्रेष्ठम्; M. अत्र एतच्छ्रेष्ठम् for इदं श्रेष्ठमिदमश्रेष्ठम्.

16. MIK अग्निष्टोमीये for अग्नीषोमीये.

अपररात्रे प्रातरनुवाकात् पूर्वमित्यर्थः । सदस्येवोदङ्मुख आसीन उपविष्टो विश्वरूपा गायति । अगासीत् । सदसीत्येतत् समीपस्थं हविर्धानमण्डपं लक्षयति । स पूर्वया द्वारा हविर्धाने प्रपद्यत (ष. विं. ब्रा॰ १. ४. ३) इति पूर्वत्र विधानात् । सदसि हविर्धानयोरभावात् ॥ ६ ॥

विश्वरूपागाने ज्योतिर्गानं दर्शयितुं कंचिदुपवादं दर्शयति—

तदुपवादोऽस्त्यध्वर्यो किं स्तुतं स्तोत्रं होता प्रातरनुवाकेनान्वशंसीदिति स ब्रूयादकार्षमहं तद्यन्मम कर्म होतारं पृच्छतेति । होतः किं स्तुतं स्तोत्रं प्रातरनुवाकेनान्वशंसीरिति स ब्रूयादकार्षमहं तद्यन्मम कर्म उद्गातारं पृच्छतेति । उद्गातः किं स्तुतं स्तोत्रं होता प्रातरनुवाकेनान्वशंसीदिति स ब्रूयादकार्षमहं तद्यन्मम कर्मागासिषं यद्गेयमिति ॥ ७ ॥

तत्रोपवादोऽन्योन्यस्य संवादः कश्चित् अस्ति । तस्यैव प्रदर्शनम् —हे अध्वर्यो! स्तुतं स्तोत्रमनु होता प्रातरनुवाकेन शस्त्रेण किमन्वशंसीत् इति शंसनमकार्षीदिति । एवमुपवक्तृभिः पृष्टः सोऽध्वर्युः ब्रूयात् यन्मम कर्म तदहमकार्षं तद् होतारं पृच्छतेति । तेन प्रत्युक्ता उपवक्तारो हे होतः किं स्तुतं स्तोत्रमनु प्रातरनुवाकेन शस्त्रेण त्वमशंसीरिति अपृच्छन् । ततः सः होता ब्रूयात् यन्मम कर्म तदहमकार्षम् । तदुद्गातारं पृच्छतेति । तेन प्रत्युक्ताः

---

1. RJA प्राक् for पूर्वम्.

5. MIJK किंचिद् for कंचिद्; R. ॰वादनं for ॰वादं.

12. R Bh JA. अन्योन्यसंवाद: for अन्योन्यस्य संवादः.

13. Bh. त्वयोक्तं for स्तुतं.

15. RJ add ततः before तेन; RJ add वदेयुः after ॰वक्तारो॰.

16. Bh. A add होता before प्रात॰; MKSI om. शस्त्रेण; Bh T तं, RK किम् for त्वम्; R. किमकार्षीरिति, T किंत्वसाविति, I. किमन्वशंसारिति for त्वमशंसीरिति; RJA om. अपृच्छन्; IS अपृच्छत for अपृच्छन्; RJ पृष्टः, A तैरुदितः for ततः; Bh om. किमशंसीरिति...किमशंसीदिति (P. 35. L. 2).

17. A om. ब्रूयात्...तैरुदितः स (P. 35. L. 2); R. एवं होत्रा, for तेन.

सन्तः उद्गातारं पृष्टवन्तः हे उद्गातः स्तुतं स्तोत्रमनु होता प्रातरनुवाकेन शस्त्रेण किमशंसीदिति । तैरुदितः स उद्गाता ब्रूयात् यन्मम कर्म तदहमकार्षम् । तस्यैव प्रदर्शनम्—यद्वेयं तदगासिषमिति ॥ ७ ॥

ततः किमित्यत्राह—

**तं चेद् ब्रूयुस्तमो वै त्वमगासीर्न ज्योतिरिति ॥ ८ ॥**

तम् उद्गातारं चेत् उपवक्तारः एवं ब्रूयुः—हे उद्गातः! त्वं तमो वै तम एव ज्योतीरहितमेव सामागासीः ज्योतिर्नागासीरिति ॥ ८ ॥

तत्रोद्गात्रा यद्वक्तव्यं तदाह—

**स ब्रूयाज्ज्योतिस्तेन येन ज्योतिः ज्योतिस्तेन येनग्ज्योतिस्तेन येन गायत्री ज्योतिस्तेन येन च्छन्दो ज्योतिस्तेन येन साम ज्योतिस्तेन येन देवता ज्योतिरेवाहमगासिषं न तमो युष्माँस्तु पाप्मना तमसा विध्यानीत्याह पाप्मनैवैनाँस्तत्तमसा विध्यति ॥ ९ ॥**

सः एवं तैः पर्यनुयुक्तः उद्गाता, एवं ब्रूयात् । तेन प्रसिद्धेन येन ज्योतिषा । ज्योतिः सूर्यात्मकं तेजो ज्योतिः प्रकाशरूपभूतं । तेन येन ऋग् ज्योतिः ऋगपि ज्योतिः अभिव्यक्ताक्षरा भवति । यद्वा, ऋक्छब्देन तदधिष्ठानाग्निर्लक्ष्यते । किं च, तेन येन गायत्री ज्योतिः । अपि च तेन येन छन्दः छन्दोमात्रं ज्योतिः । तथा तेन येन सामापि ज्योतिः । तेजो वै सामरूपम् (तै. सं. ३. २. ९. ३) इति श्रुतेः । यद्वा साम्नामधिष्ठाता सूर्यो लक्ष्यते ।

---

1. R. ते for सन्तः.
2. RKIS उक्तः for उदितः.
3. Bh T. om. एव.
4. S. तत्र तत् for ततः.
6. Bh A add तेन प्रसिद्धेन after ब्रूयुः.
10. RTSIK om. ऋग्; M. येन वार्कज्यो० for येनग्ज्यो०.
16. Bh MTJA. om. first ज्योतिः; K रुगपि, M. वागपि for ऋगपि; R तत् ऋक् ०, SI तच् ० for ऋक्.
17. JA किंच for अपि च.
19. K सामाधिष्ठाता, M. साम्नोऽधिष्ठाता, J साम्नां तद्विशिष्टतया, A साम्नां तदविष्टतया for साम्नामधिष्ठाता ...

किं बहुना । तेन येन गायत्री ज्योतिः । तेन येन सर्वाणि देवता ज्योतिः । ज्योतिराख्यं सामैवाहमगासिषं न तम इति । किंच, युष्मांस्तु प्रतिवक्तॄन् युष्मानेव पाप्मना पापरूपेण तमसा विध्यानि बाधे । युष्मानेव अज्ञान् करोमीत्याह ब्रूयात् । तत्रैवं सति एनान् प्रतिवक्तॄन् पाप्मनैव तमसा विध्यतीति । एवमतिप्रशस्तत्वात् विश्वरूपागानपक्षे ज्योतींषि गायेदित्यर्थः । यत् स्तूयते तद् विधीयते इति न्यायेन स्तुत्या विधिकल्पनस्य युक्तत्वात् । अत एव द्राह्यायणो विश्वरूपागानपक्षे ज्योतिर्गानं कालं प्रकारं च दर्शयामास । विश्वरूपाश्चेद्गायेज्ज्योतींष्यपि गायेत् । परिहिते प्रातरनुवाकेऽपोनप्त्रीयं नाम सूक्तं पुरा तस्मात्तद्धोतारमारमयित्वाग्रयणस्य वानुहिंकारं पवित्रं धारयन्नास्तावं वा प्राप्य पुरा स्तोमयोगादग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः सूर्यो ज्योतिर्ज्योतिः सूर्यः (सा. १८३१) इत्येतेषु पादेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायत्रं गायेत् (२.४.१८–२२; ला. १. ८. १३–१४) इति । अस्यार्थः । यदि विश्वरूपा गायेत् तर्हि होत्रा प्रातरनुवाके शस्त्रे समापिते सति तेनैवानुवक्तव्यमपोनप्त्रीयं नाम किंचित् सूक्तमस्ति । तदनुवचनात् पूर्वं होतारमारमेत्युक्त्वा उद्गाता ज्योतींषि गायेत् ।

---

1. M. before सर्वापि adds: किं बहुना गायत्री ज्योतिस्तेन येन बहुनोक्तेन येन तेन ; Bh AJ after ज्योतिः adds: अभवत् । तज्ज्योतिः and A after तज्ज्योतिः and before सामैव adds: ज्योतिराख्यं साम ।

2. M. ज्योतिर्ज्योतिरवश्यं for ज्योतिराख्यं; JA ०वक्तृषु for ०वक्तॄन्.

3. M. (अ)ज्ञानात् for (अ)ज्ञान्.

4. TM. add अत्र after इति ; RA एतान् for एनान्.

5. R विध्यानीति for विध्यतीति ; RKSI अतिप्रशस्तानि, Bh JA अपिपुरा for अतिप्रशस्तत्वात्; R अतिप्रशस्तानि कृत्वा for अतिप्रशस्तत्वात्.

8. T. परीक्षिते for परिहिते; Bh adds अपि after हिते.

9. Bh साम for नाम ; RT Bh MJSA om. तद्.

13. Bh A add इति after गायेत्; J. after गायेत् adds: तदा ज्योतिर्गानमपि कर्तव्यं इत्यर्थं इति विश्वरूपा गायेदिति.

14. RA ०वाकाख्ये for ०वाके ; J. om. प्रातरनुवाके ; Bh JA वक्तव्यम् for अनुवक्तव्यम् .

15. R. SI. आरमय्य for आरमेत्युक्त्वा; Bh. संनतानि, JA संततानि for उद्गाता.

यद्वा। आग्रयणं गृह्णतोऽध्वर्योः हिंकारवेलायां दशापवित्रं धारयन् तानि गायेत्। अथवा आस्तावं बहिष्पवमानस्तुतिदेशं प्राप्य स्तोमयोगात् पूर्वमग्निर्ज्योतिर्ज्योतिरग्निरित्येवं प्रथमः पादः। इन्द्रो ज्योतिर्ज्योतिरिन्द्र इति द्वितीयः। सूर्यो ज्योतिर्ज्योतिः सूर्य इति तृतीयः। एवमेतांस्त्रीन् पादान् प्रत्येकं त्रिरभ्यस्य, प्रथमे पादे त्रिरभ्यस्ते मनसा गायत्रम् [अ] निरुक्तं गायेत्। एवमुत्तरयोरपि ॥ ९ ॥

निश्वरूपागानस्य ऋचः प्रथमं पादमनूद्य व्याचष्टे—

**युञ्जे वाचं शतपदीम् (सा. १८२९) इत्याह। वाग्वाव शतपद्यृक् शतपदी शतसनिमेव तदात्मानं च यजमानं च करोति ॥ १० ॥**

शतपदीं वाचं युञ्जे साम्ना युनज्मीति यदाह वाग्वाव वाचा वै शतपदी बहुपादयुक्ता ऋगपि शतपदी गायत्र्यादिभेदेन बहुपादोपेता। तदा तया शतपद्या आत्मानं यजमानं च, शतसनिं, सनिः दानं बहुदानमेवोद्गाता करोतीति ॥ १० ॥

द्वितीयपादमनूद्य व्याचष्टे—

**गाये सहस्रवर्तनीति साम वै सहस्रवर्तनि सहस्रसनिमेव तदात्मानं च यजमानं च करोति ॥ ११ ॥**

---

1. JA अथवा for यद्वा.

2. K. आस्तवं for आस्तावं; M. adds प्राप्य after आस्तावं; Bh. ०मानं स्तुतिं for ०मानस्तुति०

3. KT एकः for एवं प्रथमः

4. T. is blank from सूर्यो upto पादान् and then adds: [प]ञ्चविंशब्राह्मणे इडान्ताः पवमाना भवन्तीति ज—

5. T. गायत्री, SK. गायत्रीं for गायत्रं; अनिरुक्तं See CN.

6. TK. इति for अपि.

7. R. ०गानाश्रय, JA ०गानाश्रयस्य for गानस्य; T. विश्व[—] र्थमेतत् तनु यदि गायत्रः प्रथमस्त्रिरात्रः तर्हि प्र[—]पदीमित्याह for विश्वरूपा... शतपदीम् (सा. १८२९) इत्याह.

16. Sh M ०वर्तनी for ०वर्तनि.

सहस्रवर्तनि स्तोभादिभेदेन बहुवर्तनि साम गायेदिति । साम वै सहस्रवर्तनि, तत् तदा तेन साम्ना आत्मानं च यजमानं च सहस्रसनिमेव उद्गाता करोतीति ॥ ११ ॥

तृतीयपादमनूद्य व्याचष्टे—

**गायत्रं त्रैष्टुभं जगदिति गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनं सवनान्येव तद्यथास्थानं यथारूपं कल्पयति ॥ १२ ॥**

किंच गायत्रं त्रैष्टुभं जगद् (सा. १८२९$^{c}$&१८३०$^{a}$) इति यदाह गायत्रमेव प्रातःसवनम् । तत्प्रचुरत्वात् । त्रैष्टुभं त्रिष्टुप्छन्दस्कं माध्यंदिनं सवनम् । त्रिष्टुब्बहुलत्वात् । जागतं तृतीयसवनम् । तच्छन्दोयुक्तत्वात् । तत् तेन त्रीण्यपि सवनानि यथास्थानं स्वस्वस्थानमनतिक्रम्य यथारूपं गायत्र्याद्युपेतत्वादिरूपमनतिक्रम्य कल्पयति उद्गाता समर्थयति ॥ १२ ॥

चतुर्थं पादमनूद्य व्याचष्टे—

**विश्वा रूपाणि संभृता (सा. १८३०$^{b}$) इति विश्वमेव तद्वित्तमात्मने च यजमानाय च संभरति ॥ १३ ॥**

विश्वा सर्वाणि रूपाणि धनानि संभृता तैः सवनैः संभृतानि संपादितानि तेष्वेव समस्तकार्यकरणात् इति यदाह तत् तेन विश्वं सर्वम् एव

---

1. Bh IS ०वर्तिनि, K ०वर्तिनः for ०वर्तनि.
2. Bh. ०वर्तिनिनि, IS ०वर्तिनी, K. ०वर्तिनि for ०वर्तनि.
5. Bh. om. गायत्रं...व्याचष्टे (L. 13).
8. JA. om. किं च गायत्रं...समर्थयति (L. 12)
9. M. after ०चुरत्वात् adds प्रातःसवनस्य । तथा.
10. RIS om. त्रिष्टुब् ० ; M. after ०बहुलत्वात् adds माध्यंदिनस्य । तथा ; M. after ०युक्तत्वात् adds तृतीयसवनस्य ।
12. R. समर्द्धयति for समर्थयति; M. after समर्थयति adds इत्यर्थः.
16. Bh. om. विश्वा; KMIS. om. रूपाणि; J निधनानि for धनानि; M. om. संभृता तैः सवनैः; IA संभृतानि सवनानि for संभृता; JA संभृतैः for तैः;
17. M. adds सवनेषु after तेषु ; Bh A add अपि and J एव after विश्वम् ; J. अपि for एव.

वित्तम् आत्मने च यजमानाय च संभरति उद्गाता संपादयति ॥ १३ ॥

पञ्चमं पादमनुवदति—

**देवा ओकांसि चक्रिरे इति ॥ १४ ॥**

देवा इन्द्रादयश्च एतानि सवनानि ओकांसि स्थानानि चक्रिरे कृतवन्तः ॥ १४ ॥

इति वेदितारं प्रशंसति—

**ओको हास्मिन् यज्ञः कुरुते य एवं वेद ॥ १५ ॥**

यः पुमान् एवम् उक्तप्रकारेण विश्वरूपागानं वेद अस्मिन् यज्ञो ज्योतिष्टोमादिः ओकः स्थानमेव कुरुते । तत्रैव प्रतितिष्ठतीत्यर्थः ॥ १५ ॥

पुनराख्यायिकया विश्वरूपागानं स्तौति—

**असितमृगा ह स्म वै पुरा कश्यपा उद्गायन्त्यथ ह युवानमनूचानं कुसुरुबिन्दमौद्दालकिं ब्राह्मणा उद्गीथाय वव्रे । ते होचुः परि वै नोऽयमार्त्विज्यमादत्ते हन्तेममनुव्याहरामेति तं हानुव्याहरिष्यन्त उपनिषेदुः । स होवाच ब्राह्मणा नमो वो अस्तु प्राह्णे वा अहं यज्ञं समस्थापयं यथा तु वै ग्रामस्य यातस्य शीर्णं वा भग्नं वा अनु समावहेदेवं वा अहं यज्ञस्यातोऽधिकरिष्यामीति । ते ह हिंकृत्योत्तस्थुः क इदमस्मा अवोचदिति ॥ १६ ॥**

पुरा पूर्वं कश्यपाः तद्गोत्रोत्पन्ना ऋषयः असितमृगाः सन्तः विश्वरूपाः उद्गायन्ति स्म खलु । अथ पुनस्तत्र युवानमनूचानं साङ्गवेदाध्यायिनम्

---

1. M. adds धनम् after वित्तं; Bh IA om. च after आत्मने; M. adds स्वस्मै स्वात्मने after आत्मने च.
4. Bh JA om. स्थानानि.
8. R Bh IS. यज्ञे for यज्ञो.
12. Bh ०बिन्दुं for विन्दं; TIA ब्राह्मण० for ब्राह्मणा०.
15. Bh. om. ब्राह्मणा; Bh TSK. संस्था० for समस्था०.
19. J. असितमृग० for सन्तः विश्व०.
20. J. साम० for साङ्ग०.

औद्दालकिम् उद्दालकस्यापत्यं कुसुरुबिन्दनामानमृषिं ब्राह्मणाः केचिदुद्गीथाय उद्गीथभक्तिगानाय वव्रे वव्रिरे वृतवन्तः । ततः ते ब्राह्मणा ऊचुः परस्परमेवमवोचन् किल । अयं कुसुरुबिन्दः नः अस्माकम् आर्त्विज्यम् ऋत्विक्कर्म पर्यादत्त एव । हन्तेति प्रश्ने । इमं कुसुरुबिन्दम् अनुव्याहराम यत्किंचित् पृच्छाम इति । ते पुनः अनुव्याहरिष्यन्तः सन्तः तमुपनिषेदुः समीपं प्राप्ताः । स पुनस्तेषामभिप्रायं ज्ञात्वा एवमुवाच—हे ब्राह्मणाः ! वः युष्मभ्यं नमः नमस्कारः अस्तु । प्राह्णे वै प्रातरेव अहं यज्ञं समस्थापयं परिसमापयामि । यथा तु वै यथा तु खलु यातस्य गतस्य ग्रामस्य शीर्णं कीटाद्युपहतं वाहनं वा गृहादिकं वा भग्नम् अनुसमादधेत् (०वहेत् ?) । कश्चित् समर्थः समादधीत एवं वै एवमेव अहं यज्ञस्य अतोः वैकल्यपरिहाराय । अनेन यजमानेन अधिकरिष्यामि नियुक्तोऽस्मीति । तेनोक्तास्ते ब्राह्मणाः अस्मै कुसुरुबिन्दाय इदम् अस्मन्मनसि स्थितम् अभिप्रायजातं कः खलु अवोचदिति ब्रुवाणाः हिंकृत्य हिंकारं कृत्वा उत्तस्थुरिति । इतिशब्दो वाक्यसमाप्तिद्योतनार्थः ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे प्रथमाध्याये चतुर्थः खण्डः ॥

---

1. Bh TSK. कुसुबिन्द० for कुसुरुबिन्द०; JA ब्राह्मणः कश्चिद् for ब्राह्मणाः केचित् ।

3. JA अग्रणीरित्यर्थः for आर्त्विज्यं.

4. ISK add ऋत्विजं before ऋत्विक्कर्म ; Bh. ०विन्दुं for विन्दं.

5. Bh T यं, JA वयं for यत् ; SI. तेन for ते.

8. Bh SI. संस्था० for समस्था०.

9. JA om. वाहनं, Bh TI ग्रहा० for गृहा०; Bh TAJ om. वा भग्नं.

10. Bh JA किंचित् for कश्चित् ; JA ०धत्ते for ०दधीत.

11. JA अर्थिना० for अतो०

12. Bh JA तस्मै for अस्मै; TK कुसुविन्दाय for कुसुरुविन्दाय; JA om. इदम् अस्मन् ० K Bh. अस्मिन् ० for अस्मन् ०.

13. KT ०जातकं for ०जातं; JA कश्चित् for खलु.

14. Bh A ins परि before समाप्ति०.

## पञ्चमः खण्डः

वाङ्मनसस्वरूपविदं वासिष्ठं वा ब्रह्माणं कुर्यादिति विधातुमादौ तत्प्रशंसार्थमिदमाम्नायते—

**इन्द्रो ह वै विश्वामित्रायोक्थमुवाच । वसिष्ठाय ब्रह्म । वागुक्थमित्येव विश्वामित्राय । मनो [वाव] ब्रह्म वसिष्ठाय ॥१॥**

इन्द्रो ह इन्द्रः किल विश्वामित्रायैवोक्थमुवाच । वसिष्ठाय ब्रह्म उक्तवान् । कथम्? वागेवोक्थमिति विश्वामित्राय । मनो वाव ब्रह्मेति वसिष्ठाय ॥ १ ॥

**तद्वा एतद्वासिष्ठं ब्रह्म ॥ २ ॥**

तद्वै तस्मादेव । एतद्ब्रह्म वासिष्ठं वसिष्ठस्यैवासाधारणम् । स एव ब्रह्मविदामग्रणीरित्यर्थः ॥ २ ॥

एवं वाङ्मनसे वसिष्ठं च प्रशंस्य इदानीं तद्विदं वासिष्ठं वा ब्रह्माणं कुर्वीतेति विधत्ते—

**अपि हैवंविदं वा वासिष्ठं वा ब्रह्माणं कुर्वीत ॥ ३ ॥**

---

2. SIA ०मनः, T ०मनसः for ०मनस; AJ om. वाङ्मनस... ०माम्नायते.

4. S. ०योक्थ्यम् T ०योऽर्थम् for ०योक्थम् .

5. मनो वाव See CN.

6. J. वाङ्मनसस्वरूपविदे खलु for इन्द्रो ह इन्द्रः किल.

7. R. वागेव कथम्, J. कथं चोक्तम् । वागित्येवम् उक्थम् for कथं वागेवोक्थम्; I मन इति J एवं for मनो वाव.

11. JA विन्दति for विदाम् and om. अग्रणीरित्यर्थः.

12. JA ०मनसयोर्वेदितारं वासिष्ठं for वाङ्मनसे...

14. KTJA Bh. ब्राह्मणं for ब्रह्माणं.

अपि ह अत एव एवंविदं यथोक्तप्रकारेण वाङ्मनसयोर्वेदितारं, वासिष्ठं वसिष्ठगोत्रोत्पन्नं वा त्रयीविदं ब्रह्माणं कुर्वीत ॥ ३ ॥

सोदाहरणं वाङ्मनसयोर्यज्ञनिर्वाहकत्वं दर्शयति—

**तद्यथोभयवर्तनिना रथेन यां यां दिशं प्रार्थयते तां तामभिप्राप्नोत्येवमेतेनोभयवर्तनिना यज्ञेन यं कामं कामयते तमभ्यश्नुते ॥ ४ ॥**

तत्रैवं सति यथा लोके कश्चित् समर्थ उभयवर्तनिना उभे वर्तन्यौ चक्रे यस्य तेन रथेन यां यां दिशं गन्तुं प्रार्थयते कामयते तां तां दिशम् अभिमुखं प्राप्नोति, एवं तथैव उभयवर्तनिना,–उभे वाङ्मनसे वर्तन्यौ चक्रस्थानीये यस्य तेन–, एतेन यज्ञेन यं कामम् इष्टं पदार्थं कामयते यजमानः तमभ्यश्नुते अभितः प्राप्नोति। तथा च बह्वृचब्राह्मणे पठ्यते— अथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयात्। अयं वै यज्ञो योऽयं पवते तस्य वाक् च मनश्च वर्तन्यौ वाचा हि मनसा च यज्ञो वर्तते (ऐ. ब्रा. ५. ३३. २) इति ॥ ४ ॥

ब्रह्मकर्तव्यं वाग्यमनं विधातुं तत्प्रशंसार्थं तस्य वाग्व्यवहारं निन्दति—

**अथार्धभाग्वै मनः। प्राणानां स यद्व्याहरति वाचि तन्मनः प्रतिष्ठापयति। तद्यथैकवर्तनिना रथेन न कांचन दिशं व्यश्नुते तादृगेतत् ॥ ५ ॥**

---

1. JA स्वत० for अत०; RI. ०मनसो० for ०मनसयो०.
3. TR. Bh यज्ञे for यज्ञ.
5. T. एवमेव तेन for एवमेतेन.
7. R यद्युभे, Bh JAK यद्यो for यथा.
8. Bh JA om. कामयते.
11. Bh JA add kamam after तम्.
12. RS. कथं for अथ.
13. Bh MTKSA वर्तन्या for वर्तन्यौ; R Bh JA add च after वाचा.

अथेति ब्रह्मकर्तव्यविध्युपक्रमे । प्राणानाम् इन्द्रियाणां मध्ये मनो यज्ञस्यार्धभाग्वै । तद्वर्तन्यात्मकत्वात् । तथा च सति स ब्रह्मा यद्व्याहरति वाग्विसर्जनं करोति तत् तदा वाचि मनः प्रतिष्ठापयति । वाङ्मनसे एकीकुर्यादित्यर्थः । मनःपूर्वकत्वाद्वाक्प्रवृत्तेः । तत् तत्रैवं सति यथा लोके कश्चित् एकवर्तनिना एकचक्रेण रथेन कांचन कामपि दिशं न व्यश्नुते न प्राप्नोति । एतद् वाचा व्याहरणमपि तादृक् । तेन यज्ञफलं न सिध्येत् । वैकल्यादित्यर्थः ॥ ५ ॥

एवं प्रशंस्य वाग्यमनं विधत्ते—

यावदृचा यजुषा साम्ना कुर्युस्तावद् ब्रह्मा वाचंयमो बुभूषेत् ॥ ६ ॥

ऋग्यजुःसामभिर्होत्रध्वर्यूद्गातारो यावत् स्वस्वकर्म कुर्युः तावत् तावन्तं कालं ब्रह्मा वाचंयमो वाग्यमनवान् बुभूषेद्भवेत् । अत्र विशेषमाह द्राह्यायणः—प्रणीतासु प्रणीयमानासु वाचं यच्छेदा तासां विमोचनात् । तास्वेव प्रणीयमानास्वाहविष्कृतस्तम्बयजुषश्चाध्यासमिधः प्रस्थानीयाया इति वा । यत्राध्वर्युबह्वृचौ चेष्टेतां यत्र न चेष्टेतां वाग्यतः प्रायस्त्वेव स्यात् (१२.२.३२-३४; ला.४.११.१-३) इति । अस्यार्थः—प्रणीताप्रणयनमारभ्य तद्विमोचनपर्यन्तम् । अथवा । प्रणीताप्रणयनप्रभृति आहविष्कृतः हविष्कृदेहीति संप्रैषपर्यन्तम् । यद्वा, स्तम्बयजुरारभ्य आसमिधः प्रस्थानीयायाः—प्रस्थानम् अनुयाजप्रचारः तदर्था समित् प्रस्थानीया तस्या आधानपर्यन्तं वा ।

---

2. RSI om. तद्; RKTMJ om. स; Bh JA यद्वाचा व्या० for यद्व्या०.

3. RS add तत् before मनः.

4. S. om. मनः...वैकल्यादित्यर्थः(L. 7).

5. RJAK. add न after रथेन.

6. R Bh M. व्याप्नोति for प्राप्नोति.

12. MSI om. बुभूषेत्; RJSIK तत्र for अत्र.

14. R. ०श्चाराध्या for ०श्चाध्या०.

17. T. adds तत् before तद्विमो०; RJ ०णयनमारभ्य for ०णयनप्रभृति.

अथवा, अध्वर्युहोत्रोः यावत्कर्म तावत् । यद्वा, उभयोः कर्माभावेऽपि ब्रह्मवाचो न कामचारः । किंतु, तत्रापि ब्रह्मा प्रायेण वाग्यत एव स्यादिति ॥ ६ ॥

ऋग्वेदादिविहितकर्मन्यूनातिरेके प्रायश्चित्तत्वेन ब्रह्मणा कर्तव्यं व्याहृतिहोमं विधातुमादौ वेदत्रयसारत्वेन लोकत्रयसारत्वेन च व्याहृतीः प्रशंसति—

प्रजापतिर्वा इमांस्त्रीन् वेदानसृजत । त एनं सृष्टा नाधिन्वन् तानभ्यपीडयत् । तेभ्यो भूर्भुवःस्वरित्यक्षरत् । भूरित्यृग्भ्योऽक्षरत् । सोऽयं लोकोऽभवत् । भुवरिति यजुर्भ्योऽक्षरत् । सोऽन्तरिक्षलोकोऽभवत् । स्वरिति सामभ्योऽक्षरत् । स स्वर्गो लोकोऽभवत् ॥ ७ ॥

प्रजापतिः ब्रह्मा सर्गादौ इमान् प्रसिद्धान् ऋगादीन् त्रीन् वेदान् असृजत । तेन सृष्टास्ते वेदाः एनं प्रजापतिं नाधिन्वन् नाप्रीणयन् । ततः प्रजापतिः तेभ्यः सारजिघृक्षया तानभ्यपीडयत् । तेभ्यः पीडितेभ्यः भूर्भुवःस्वरिति व्याहृतित्रयम् अक्षरत् निरगच्छत् । तस्य विवरणम्—ऋग्भ्यः ऋग्वेदात् भूरित्यक्षरत् । सः व्याहृतिरूपः रसः अयं भूलोकोऽभवत् । यजुर्भ्यो यजुर्वेदाद् भुव इत्यक्षरत् । सः रसो अन्तरिक्षलोकोऽभवत् । सामभ्यः सामवेदात् स्वरित्यक्षरत् । स रसः स्वर्गो लोकोऽभवत् ॥ ७ ॥

प्रथमं व्याहृतिहोमं सस्तुतिकं विधत्ते—

---

1. T अध्वर्युहोत्रोः for उभयोः; Bh. ०वयो, T ०वर्चो for ०वाचो.

2. IS. om. ब्रह्मा ; R Bh JA om. एव.

9. Bh J स्वर्ग० for स्वर्गो०.

10. Bh JA om. सर्गादौ; SK स्वर्गादौ for सर्गादौ ; RJA ऋग्वेदा० for ऋगा०.

13. Bh A add किल after अक्षरत्.

17. I सस्तुतिं for सस्तुतिकं.

तद्यदृक्त उल्बणं क्रियेत गार्हपत्यं परेत्य भूः स्वाहेति जुहुयात् । अयं वै लोको गार्हपत्योऽयं लोक ऋग्वेदस्तद्वा इमं च लोकमृग्वेदं च स्वेन रसेन समर्द्धयति ॥ ८ ॥

तत्र यदृक्तः ऋग्वेदविहितात् कर्मण उल्बणं न्यूनमधिकं वा होत्रादिभिः क्रियेत तर्हि ब्रह्मा गार्हपत्यम् अग्निं परेत्य भूःस्वाहेति अनया व्याहृत्या जुहुयात् । अयं वै अयमेव भूलोको गार्हपत्यः । अयम् एव लोकः ऋग्वेदः । तद्वै तेनैव होमेन इमं च लोकम् ऋग्वेदं च स्वेन स्वकीयेन रसेन सारेण समर्द्धयति समृद्धं करोति ॥ ८ ॥

द्वितीयव्याहृतिहोमं सप्रशंसं विधत्ते—

अथ यदि यजुष्ट उल्बणं क्रियेतान्वाहार्यपचनं परेत्य भुवः स्वाहेति जुहुयात् । अन्तरिक्षलोको वा अन्वाहार्यपचनोऽन्तरिक्षलोको यजुर्वेदः । तद्वा अन्तरिक्षलोकं च यजुर्वेदं च स्वेन रसेन समर्द्धयति ॥ ९ ॥

अथेत्यत्रान्तरवाक्योपक्रमे । यजुष्टो यजुर्वेदविहितात् कर्मणो यद्युल्बणं न्यूनमधिकं वा अध्वर्य्यादिभिः क्रियेत तर्हि अन्वाहार्यपचनं दक्षिणाग्निं परेत्य भुवः स्वाहेति ब्रह्मा जुहुयात् । अन्तरिक्षलोको वै अन्तरिक्षलोक एव अन्वाहार्यपचनः । अन्तरिक्षलोक एव यजुर्वेदः । तद्वै तेनैव होमेन अन्तरिक्षं च यजुर्वेदं च स्वेन रसेन सारेण समर्द्धयति ॥ ९ ॥

तृतीयव्याहृतिहोमं सप्रशंसं विधत्ते—

अथ यदि सामत उल्बणं क्रियेताहवनीयं परेत्य स्वः स्वाहेति जुहुयात् । स्वर्गो वै लोक आहवनीयः । स्वर्गो

1. TI. क्रियते for क्रियेत.
2. Bh. adds वै after अयं.
5. I. क्रियते for क्रियेत; Bh K तत्र for ब्रह्मा; TISA. om. ब्रह्मा; KTS add तत्र I. अत्र after परेत्य.
7. Bh TISAK add च after लोकं.
8. R. om. सारेण; Bh समृद्धिं०, T समृद्धी० for समृद्धं.
18. RK om. सारेण; JA om. रसेन.
19. Bh. (आ) हवनीय० for व्याहृति०.

लोकः सामवेदः । तद्वै स्वर्गं च लोकं सामवेदं च स्वेन रसेन समर्द्धयति ॥ १० ॥

स्पष्टमेतत् ॥ १० ॥

एवं विशेषेण प्रायश्चित्तं विधायेदानीं साधारण्येन दर्शयति—

अतो वाव यतमस्मिन्नेव कतमस्मिंश्चोल्बणं क्रियेत सर्वेष्वेवानुपर्यायं जुहुयात् । तथा हास्य यज्ञोऽस्कन्नः स्वगाकृतो भवतीति ॥ ११ ॥

अतो वाव अपि वा यतमस्मिन् कतमस्मिन् च कर्माणि उल्बणं न्यूनमधिकं वा क्रियेत तदा सर्वेषु अग्निषु अनुपर्यायं क्रमेण व्याहृतिभिः ब्रह्मा जुहुयात् । तथा च अस्य यजमानस्य यज्ञः अस्कन्नः अन्यथाकृतो न भवति । किं तु, स्वगाकृतो यथोक्तमार्गेणैव कृतो भवति ॥ ११ ॥

हविषः स्कन्दने पात्रादीनां च भेदने प्रायश्चित्तं विधातुम् आदौ दोषं दर्शयति—

अथ स्कन्नाद्वा भिन्नाद्वा त्रेधा यज्ञ उत्क्रामति देवान् दिवं तृतीयमन्तरिक्षं मनुष्यांस्तृतीयं पृथिवीं पितॄंस्तृतीयम् ॥ १२ ॥

अथ पुनः स्कन्नाद् हविषः स्कन्दनाद् वा भिन्नात् पात्रादीनां भेदनाद् वा यज्ञस्त्रेधा त्रिप्रकारेण उत्क्रामति । कथम्? देवान् दिवं

---

3. R Bh JA add अथ यदि सामत इत्यादि समर्द्धयतीति before स्पष्टमेतत्.

4. Bh T. विशेषणं for विशेषेण; SIK साधारणेन for साधारण्येन R Bh JA प्रदर्शयति for दर्शयति.

5. S. क्रियते for क्रियेत.

7. Bh. स्वागा० for स्वगा०.

8. Bh T अथो० for अतो०; TJA add कस्मिंश्चित् after कतमस्मिन्.

10. M. आहविष्कृतः for यज्ञः अस्कन्नः.

11. Bh. स्वागा० for स्वगा०.

12. R Bh JA हविषां KM हविष्० for हविषः; MTIKS ०स्कन्दे for स्कन्दने; TMIKS भेदे for भेदने.

16. R Bh IJSAMs अध for अथ.

17. S. अयं for कथं; I om. कथम्.

तदधिष्ठितद्युलोके(कं ?) चेति । तृतीयं गगनं, त्रित्वसंख्यापूरकत्वात् । एवमन्यदपि व्याख्येयम् ॥ १२ ॥

तत्र प्रायश्चित्तं विधत्ते—

**तदभिमृशेद्देवान् दिवं यज्ञोऽगात्ततो मा द्रविणमष्टु । अन्तरिक्षं मनुष्यान्यज्ञोऽगात्ततो मा द्रविणमष्टु । पृथिवीं पितॄन् यज्ञोऽगात्ततो मा द्रविणमष्टु । यत्र क्व च यज्ञोऽगात्ततो मा द्रविणमष्टु । इति । तद्वा आत्मानं च यजमानं च स्वेन रसेन समर्द्धयति ॥ १३ ॥**

देवान् इन्द्रादीन् दिवं च यज्ञोऽगात् अगमत् । ततः तत्सकाशात् मा मां द्रविणम् अष्टु प्राप्नोतु । एवमन्यदपि व्याख्येयम् । देवानित्यारभ्य यत्र क्व च यज्ञोऽगात्ततो मा द्रविणमष्टित्यन्तेन मन्त्रेण तत् स्कन्नं हविर्भिन्नं च पात्रादिकमभिमृशेत् । तद्वै तेनैव अभिमर्शनेन आत्मानं च यजमानं च स्वेन रसेन यज्ञफलेन समर्द्धयति ॥ १३ ॥

यज्ञहविरुल्बणे वैष्णववारुण्यर्चा अपामुपनिनयनं प्रायश्चित्तत्वेन विधातुं तदर्थवादत्वेनेदमाम्नायते—

**वरुणो वा एतद्विष्णौ यज्ञमुपार्पयति ॥ १४ ॥**

वरुणो वै अपां पतिः वरुण एव । एतत् ,—लिङ्गव्यत्ययः,—विष्णावुपार्पयति स्थापितवानिति ॥ १४ ॥

---

1. ISK. तदधिष्ठितद्विलोके, R Bh MTIA तदधिष्ठितद्युके यदधिष्ठितं for तदधिष्ठितद्युलोकं See CN; MTSK त्रिक० for त्रित्व०.

9. Bh MTJA om. इन्द्रादीन् Bh JA उदगमत्, M अक्रामत् for अगमत्; T Bh तत्काशान्मा मां, JA तत्कारणं मा मां, RSI तत्सकाशत् आत्मा for तत्सकाशत् मा मां.

10. BhA add ततः and J तद् after द्रविणं.

11. Bh JA om. तत्; M. एतत for तत्.

12. R Bh JA om. first च; SIK om. एव.

14. Bh JA ०हविषाम् for हविः; Bh JA om. उल्बणे; M. ०वारुण्याभ्याम्, for ०वारुण्यर्चा; Bh JA. नयनं for नि नयनम्.

17. IS. om. एव; MT तद्वि० for एतद्वि०; Bh. adds इष्ट्वा after यज्ञम्.

अथ प्रायश्चित्तं विधत्ते—

यद्यज्ञ उल्बणं क्रियते तदप उपनिनयेद्ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ स्वाहेति तद्वा आत्मानं च यजमानं च स्वेन रसेन समर्द्धयति ॥ १५ ॥

यद् यदि यज्ञे उल्बणं क्रियते तत् तर्हि ययोरोजसा इत्यादिना स्वाहान्तेन मन्त्रेण अपः उदकानि तस्मिन् हविषि उपनिनयेत् पाकवेलायां हविरुद्गतं चेत्। तद्वै तेनैव अपामुपनिनयेन आत्मानं च यजमानं च स्वेन रसेन यज्ञफलेन समर्द्धयति इति। वरुणेन यज्ञस्य विष्णौ समर्पितत्वात् वैष्णववारुण्यर्चा अपामुपनिनयने कृते यज्ञः समाहितो भवतीत्यर्थः। अस्य मन्त्रस्यायमर्थः। ययोः विष्णुवरुणयोरोजसा तेजसा च रजांसि लोकाः स्कभिता स्कभितानि यथावत् स्थापितानि । किं च। [या] यौ वीर्येभिः वीर्यैः बलैः वीरतमा अतिशयेन वीरौ तथा शविष्ठा शविष्ठौ अतिशयेन बलवन्तौ। अपि च या यौ सहोभिः अन्यदीयैः बलैः अप्रतीता अप्रतिगतौ पत्येते ईश्वरौ भवतः। पत्यतिरैश्वर्यकर्मा। पूर्वहूतौ पूर्वं प्रथमम् आह्वातव्यौ विष्णू वरुणौ। उभयत्र द्विवचनं परस्परसाहित्यापेक्षया। विष्णुवरुणावित्यर्थः। तावगन् यज्ञोऽगमत्। गमेर्लुङि लेर्लुकि मो नो धातोः (पा. ८. २. ६४) इति नकारे कृते रूपम्। स्वाहा सुहुतमस्त्विति ॥ १५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे प्रथमाध्याये पञ्चमः खण्डः

---

1. Bh K. क्रियेत for क्रियते.

7. A मन्त्रेण स्कन्नं हविर्भिन्नं for स्वाहान्तेन मन्त्रेण; J om. स्वाहान्तेन and adds स्कन्नं हविर्भिन्नं पात्रादि after मन्त्रेण.

8. Bh K उद्गच्छेत् for उद्गतं चेत्; Bh ०नयने, TIA ०निनयने for ०निनयेन.

9. JA विष्णोः for विष्णौ.

10. JA पात्राणम् for अपाम्; RSI. समर्पितो० for समाहितो०.

11. RJSIA om. स्कभिता; MTSI.

12. यद्यावत् for यथावत्.

15. IS. add इति after ०वरुणौ.

# षष्ठः खण्डः

विराजोऽतिरेके तन्न्यूनतायां च प्रायश्चित्तं दर्शयितुमाह—

**ये विराजमतियजन्ते विराजमेव त ईप्सन्तोऽमुष्मिन् लोके श्राम्यन्ति । अथ य एनामर्वाग्दभ्नुवन्ति विराजमेव त ईप्सन्तोऽमुष्मिन् लोके श्राम्यन्ति । तेषां तथा श्राम्यतां सुकृतं क्षीयते । न हि तदमुष्मिन् लोके शक्नुवन्ति यदस्माल्लोकादकृत्वा प्रयन्ति ॥ १ ॥**

ये ऋत्विजः विराजं दशसंख्याम्, दशाक्षरा विराड् (श. ब्रा. १.१.२२, ऐ. ब्रा. ३.४१.४) इति श्रुतेः । चतुष्टोमस्य ज्योतिष्टोमस्य तस्य नवतिशतं स्तोत्रीया (तां ब्रा. १६.१.८) इति स्तोत्रीयाणां संख्यासंपत्तिर्ब्राह्मणेऽभिहिता । ताश्च विराजा संपाद्यन्ते । अतस्तत्संपत्तिहेतुर्दशसंख्या विराट् । तां यदि अतियजेरन् अतिक्रम्य स्तुवीरन् ते अमुष्मिन् परलोके विराजं वैराज्यम् अन्नं वा, 'अन्नं वै विरड्' (श. ब्रा. ८.३.२.१३) इति श्रुतेः, ईप्सन्तः कामयमानाः श्राम्यन्ति एव । न तु विराजं लभन्ते इत्यर्थः ॥

---

2. RJ om. तन् ०; K ०रेक तन् ० for ०रेके तन् ०.

4. Ms Bh. एनं for एनां.

10. Bh J adds स्तोत्रं before तस्य ; RSIK. om. स्तोत्रीया इति.

11. RSI त्रयात्ये, T Bh ०पति०, M ०पत्रि० K. सूत्रवति for ०संपत्ति० ; RSI. ०हितं for ०हिता ; RSI अतश्च for ताश्च; RSI विराजं for विराजा; Bh T समाप्यन्ते समापयन्ति for संपाद्यन्ते; RSI. ततः for अतः.

14. MSIK om. एव; T Bh. अनु for न तु; SI. om. तु.

अथ पुनः ये ऋत्विजः एनां विराजं अर्वाग् दम्नुवन्ति [ते] उक्तस्तोत्रीया-संख्यां न्यूनां कुर्युरित्यर्थः । अन्यत् समानम् । किं च, तथा श्राम्यतां व्यर्थमायस्यतां तेषां सुकृतं पूर्वार्जितमपि पुण्यं क्षीयते । तथा हि—यत् कर्म अकृत्वास्माल्लोकात् प्रयन्ति परलोकं, तत्कर्मफलं प्राप्तुममुष्मिन् लोके न शक्नुवन्ति इति विराजोऽतिरेकन्यूनत्वे प्रत्यवायहेतुत्वात् प्रायश्चित्तनिमित्ते । तत्र प्रायश्चित्तविशेषस्यानुक्तत्वात् पूर्ववत् सामोल्बणे यत् आहवनीये स्वः स्वाहा (ष.वि.ब्रा.१.५.१०) इति प्रायश्चित्तमुक्तं तदेवात्रापीत्युपगन्तव्यम् ॥ १ ॥

होत्रादीनां व्यापाराभावेऽपि ब्रह्मणो वाग्यमनलोपे प्रायश्चित्तविधानाय तत्रापि ब्रह्मणो वाग्यमनमाख्यायिकापूर्वं विधातुम् उपक्रमते—

**एतद्ध स्माहोद्दालक आरुणिः कथं ते यजेरन् कथं वा याजयेयुर्ये यज्ञस्य व्यृद्धेन न नन्दन्ति । नन्दन्ति यत्समृद्धेनेति ॥ २ ॥**

एतत् वक्ष्यमाणम् आरुणिः अरुणपुत्रः उद्दालकनामा ऋषिः [ह] एव आह स्म उक्तवान् किल । ये ऋत्विजः यज्ञस्य व्यृद्धेन समृद्ध्यभावेन । अङ्गवैकल्येनेत्यर्थः । न नन्दन्ति दुःखिता भवन्ति । यत्समृद्धेन यस्य यज्ञस्य संपूर्त्या नन्दन्ति हृष्टा भवन्ति । ते कथं केन प्रकारेण कस्मिन् काले यजेरन् वा अथवा कथं याजयेयुरिति ॥ २ ॥

---

1. MSI. om. ऋत्विजः; Bh. एनं for एनां; MSI स्तुवन्ते for दम्नुवन्ति.

4. RK Bh MS कृत्वा for अकृत्वा; RJ om. परलोकं.

5. Bh M add तनू० before न्यूनत्वे.

6. Bh J ०श्चित्तेति for ०श्चित्त०.

7. RKJSI. ०त्यव० for ०त्युप०.

8. R Bh MJ add स्व० before व्यापार; MJ om. ०ऽपि.

11. K. वृद्ध्यै for व्यृद्धेन.

13. J उद्दालको नाम for उद्दालकनामा; R J Bh om. एव.

14. R. समृद्धाङ्गाभावेन for समृद्ध्यभावेन.

ततः किमित्यत्र आह—

**अहं वाव काले यजेय । अहं काले याजयेयम् । योऽहं यज्ञस्य व्यृद्धेन न नन्दामि । नन्दामि यत्समृद्धेनेति ॥ ३ ॥**

अहं वाव अहमेव काले यजेय । अहमेव काले याजयेयम् । मत्तोऽन्यः कः काले यजेत याजयेद्वा । अन्यदतिरोहितार्थम् ॥ ३ ॥

कथमित्यत्राह—

**अपि ह स्वादेव कामाद्यज्ञस्य व्यर्द्धयति । भूयसी-रुपाप्सीरुपाप्स्यामि भिषक्कृत्वा ॥ ४ ॥**

यो ब्रह्माणमकृत्वा काले न यजेत याजयेद्वा स यज्ञस्य संबन्धिनः स्वात् स्वीयात् कामादपि व्यर्द्धयत्येव हीयते एव खलु । अतोऽहं भिषक्कृत्वा ब्रह्माणं भिषजं प्रायश्चित्तविदं कृत्वा भूयसीरुपाप्सीः प्राप्तव्यान् बहून् कामान् उपाप्स्यामीति ॥ ४ ॥

ब्रह्मकरणे विद्वत्संमतिं दर्शयति—

**एतद्ध स्म वै तद्विद्वानाह— यावद्वा ऋचा होता करोति होतृष्वेव तावद्यज्ञः । यावद्यजुषाध्वर्युरध्वर्युष्वेव तावत् । यावत्साम्नोद्गातोद्गातृष्वेव तावद् । ब्रह्मण्येव तावद्यज्ञो यत्रोपरताः ॥ ५ ॥**

तदेतत् वक्ष्यमाणं विद्वानाह स्म उक्तवान् किल । यावद्वै यावत्येव काले होता ऋचा करोति शस्त्रादिकं पठति तावद्धोतृष्वेव यज्ञस्तिष्ठति । यावदेव

1. MSIK किं तत्र for किमित्यत्र
5. RSI. अन्यो, J अपि for मत्तो०.
9. R उक्त्वा, T कृत्वा for अकृत्वा ; J om. यो ब्रह्माणम् ... याजयेद्वा; Bh T. यज्ञसं० for यज्ञस्य सं; J यजमानसंबन्धिनः स यज्ञफलानि सत्त्वान्नाश्नीयात् स्वस्मात् for यज्ञस्य...स्वीयात्.
10. Bh. सत्त्वान्नाश्नीयात् for स्वीयत्.
13. R. विद्वत्वम् अज्ञं, J विद्वत्सज्ञां, SI विद्वर्थज्ञम् for विद्वत्संमतिम्. see CN.
19. SK om. एव; M. adds यत्र यस्मिन् काले before यावदेव I. om. यावदेव...यज्ञस्तिष्ठति (P. 52. 1. 1)

अध्वर्युर्यजुषा यजुर्वेदविहितं कर्म करोति तावदध्वर्युष्वेव यज्ञस्तिष्ठति। यावदुद्गाता साम्ना स्तोत्रादिकं पठति तावदुद्गातृष्वेव यज्ञस्तिष्ठति। यत्र यस्मिन् काले उपरता होत्रादयः कर्मरहितास्तिष्ठन्ति तावद् ब्रह्मण्येव यज्ञस्तिष्ठतीति ॥ ५ ॥

अस्त्वेवम्, ततः किम्? तत्राह—

**तस्मात्तस्मिन्नन्तर्धौ ब्रह्मा वाचंयमो बुभूषेत् ॥ ६ ॥**

यस्मादेवं तस्मात्तस्मिन्नन्तर्धौ होत्रादीनां व्यापाराभावकाले ब्रह्मा वाचंयमो बुभूषेत् सावधानो भवेदेवेत्यर्थः ॥ ६ ॥

एवं वाग्यमनं विधाय तल्लोपे प्रायश्चित्तमाह—

**स यदि प्रमत्तो व्याहरेदेता वा व्याहृतीर्मनसानुद्रवेत्। भूर्भुवःस्वरिति ॥ ७ ॥**

यदि ब्रह्मा प्रमत्तः अनवहितः सन् व्याहरेत् मौनं परित्यजेत् तर्हि भूर्भुवःस्वरिति एता व्याहृतीः मनसा अनुद्रवेत् चिन्तयेत् ॥ ७ ॥

वाशब्दसूचितं प्रायश्चित्तान्तरमाह—

**वैष्णवीं वर्चम् 'इदं विष्णुर्विचक्रमे' (सा. २२२) ॥ ८ ॥**

यदि प्रमादाद् ब्रह्मा तदा व्याहरेत्तर्हि इदं विष्णुर्विचक्रमे (सा. 222) इति वैष्णवीमृचं वा मनसा अनुद्रवेदित्यनुषङ्गः ॥ ८ ॥

अथ सर्वप्रायश्चित्ततया महाव्याहृतिभिः होमं विधातुम् उपक्रमते—

---

2. J adds करोति after साम्ना.

3. Bh MI. om. तावद्.

5. R. किं तत इत्यत्राह for ततः किम्? तात्रह...

7. SI. om. यस्मादेवं; Bh T. ०भावात् for ०भाव०.

8. Bh एवेत्यवधारणो, M साधारणो० J एवेत्यवधारणं, T अवधारणे for सावधानो०.

9. M. तस्य लोपे for तल्लोपे.

12. M प्रमादेन सः for अनवहितः सन्.

16. MKSI. om. ब्रह्मा तदा.

18. TJ ०व्याहृत्या होमं SK ०व्याहृति होमं for ०व्याहृतिभिः होमं; Bh JR add होमम् after विधातुम्.

**राज्ञो ह मितस्य मर्कटोंऽशूनादाय वृक्षमापुप्रुवे ॥ ९ ॥**

मितस्य मुष्टिभिः परिमितस्य राज्ञः सोमस्य अंशून् अवयवान् आदाय मर्कटः मर्कटवेषधारी इन्द्रः । उत्तरत्र मघवन्निति मर्कटस्य संबोध्यमानत्वात् । वृक्षमापुप्रुवे उदपतत् ॥ ९ ॥

ततः किमित्यत्राह—

**स हारुणिराहुतिमुद्यत्योवाच पुनः वैनान्निवप्स्यस्यतो वाव मृतोऽवपप्स्यस इति ॥ १० ॥**

पश्चात् आरुणिः उद्दालकः प्रायश्चित्तं कर्तुम् आहुतिमुद्यत्य एवम् उवाच—हे मर्कट! त्वम् एनान् अंशून् पुनः निवप्स्यसि प्रक्षेप्स्यसि वा, अथवा मृतः सन् अतो वृक्षाद् अवपप्स्यसे अवपत्स्यसीति ॥ १० ॥

मर्कटस्योत्तरं दर्शयति—

**स होवाच किं होष्यसीति ॥ ११ ॥**

पुनरारुणेर्वचनं दर्शयति—

**प्रायश्चित्तमिति ॥ १२ ॥**

प्रायश्चित्तं होष्यामीति ॥ १२ ॥

पुनर्मर्कटस्य प्रश्नमाह—

**किं प्रायश्चित्तमिति ॥ १३ ॥**

आरुणिरुत्तरमाह—

**सर्वप्रायश्चित्तमिति ॥ १४ ॥**

---

1. K Bh MT आपुप्लुवे for अपुप्रुवे.

3. R. ०रूपः, MK. ०रूपी for ०वेषधारी.

6. Bh MTSK. om. ह; T. आहुतीः for अहुतिम् ; Bh निवप्स्य ष्टवः प्रपश्यते, for निवप्स्यस्यतो.

8. MJSIK. om. प्रायश्चित्तं.

9. RJS add व्या before निवप्स्यति; Bh MJ. om. प्रक्षेप्स्यसि.

10. J om. अवपत्स्यसीति.

16. J मर्कटः for मर्कटस्य and om. प्रश्नम्.

पुनर्मर्कटः पृच्छति--

किं सर्वप्रायश्चित्तमिति ॥ १५ ॥

आरुणिरुत्तरमाह--

महाव्याहृतीरेव मघवन्निति ॥ १६ ॥

हे मघवन्! महाव्याहृतीरेव प्रायश्चित्तार्थं होष्यामीति शेषः ॥ १६ ॥

पुनः आरुणिं मर्कटः पृच्छति—

स होवाचोम् आरुणे यदाहुतिमनूचिषे कथं नु विदांचकर्थ मर्कटोऽशूनादत्तेति ॥ १७ ॥

सः मर्कटः ओमिति अङ्गीकृत्य एवमुवाच ह—हे आरुणे! आहुतिमन्! उद्यताहुतियुक्तस्त्वं, मर्कटोऽशून् आदत्त आजहार अतः सर्वप्रायश्चित्तं होष्यामीति, यदूचिषे कथं नु कथमिव तत् विदांचकर्थ अस्येदं प्रायश्चित्तमिति कथमज्ञासीरित्यर्थः ॥ १७ ॥

पुनरारुणेरुत्तरमाह—

स होवाच यच्चावगतं यच्चानवगतं सर्वस्यैषैव प्रायश्चित्तिरिति ॥ १८ ॥

स एवमुवाच ह यत् कर्मणो न्यूनत्वमधिकत्वं वा अवगतं ज्ञातं यदपि चानवगतं तस्य सर्वस्य ज्ञातस्याज्ञातस्याविहितविशेषप्रायश्चित्तस्यैषैव महाव्याहृतिरेव प्रायश्चित्तिरिति शास्त्रतोऽवगच्छामीति ॥ १८ ॥

अस्तु, प्रस्तुते किमायातम्! इत्यत्राह—

तस्मादेतामेव जुहुयात् ॥ १९ ॥

---

3. M. adds पुनः before आरुणिः.
5. Bh MJ. om. होष्यामीति...पृच्छति.
7. T. आहुतिमान for आहुतिमन्.
9. JTM आहुतिमान् for आहुतिमन्.
10. RS उद्यताहुतिः यत् यतः तत्त्वं, KI. उद्यताहुतियत्तस्त्वं for उद्यताहुतियुक्तस्त्वं.
11. Bh TJ कथमिति for कथमिव; Bh J कस्य for अस्य.
12. RSI अविज्ञासी० for अज्ञासी०.
17. M Bh SI. om. (अ)ज्ञातस्य; T. विहित० for (अ)विहित.
18. MSI. ०व्याहृती० for ०व्याहृति०.

यस्मादेवं तस्मात् एतां महाव्याहृतिमेव सर्वप्रायश्चितार्थं जुहुयात् । १९ ॥

तत्रैव प्रायश्चित्तान्तरमाह—

**अपि वाज्ञातं यदनाज्ञातं यज्ञस्य क्रियते मिथ्वग्ने कल्पय त्वम् । हि वेत्थ यथायथं स्वाहेति । अपि वा प्राजापत्यां प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहेति । तद्वा आत्मानं च यजमानं च स्वेन रसेन समर्द्धयति ॥ २० ॥**

अपि वा अथवा आज्ञातम् अवगतं यन्न्यूनत्वम् अधिकत्वं वा यदपि च अनाज्ञातं यज्ञस्य संबन्धि मिथु मिथः क्रियते हे अग्ने अस्य यज्ञस्य संबन्धि तद् उभयं कल्पय फलसमर्थं कुरु । हि यस्मात् त्वं यथायथं कर्मणः स्वरूपं वेत्थ जानासि स्वाहा सुहुतमस्तु इति अनेन मन्त्रेण जुहुयात् । अपि वा अथवा हे प्रजापते ! यान्येतानि विश्वा विश्वानि जातानि भुवनानि [त्वत्] त्वत्तोऽन्यो न परिता बभूव । त्वमेव परिभवसीत्यर्थः । वयं यत्कामाः यदभीष्टं कामयमानाः ते तुभ्यं जुहुमः नः अस्माकं तद् अभीष्टम् अस्तु । किं च, वयं रयीणां धनानां पतयः स्याम स्वाहेति अनेन मन्त्रेण प्राजापत्यां प्रजापतिदेवताकाम् आहुतिं जुहुयात् । तद्वै तेनैव आत्मानं च यजमानं च स्वेन अभीष्टेन रसेन यज्ञफलेन समर्द्धयति समृद्धं करोति इति ॥ २० ॥

---

10. RSI. om. यन्० ; RSIT om. वा after अधिकत्वं; Bh. यावद् for यद्; J. वा for च.

11. J. adds ऋत्विग्भिः after मिथु.

12. MSK ०तथं for यथं.

13. M. om. मन्त्रेण.

14. Bh J. om. अथवा; Bh J. प्राजापत्यां प्रजापत इत्यस्य व्याख्यानं ह्युक्तं भवतीत्यर्थः for हे प्रजापते...०भवसीत्यर्थः ।

15. RSI. परिता भवसि for परिभवसि.

16. J. यदित्थं for यदभीष्टं ; R adds इति after अस्तु.

19. SIK समर्थं, Bh समृद्धिं for समृद्धं; RKSI. om. इति.

अथ यज्ञे मृण्मयपात्रभेदने प्रायश्चित्तं दर्शयति—

**अथ यद्वै किंच यज्ञे मृन्मयं भिद्येत तदभिमृशेत्, भूमिर्भूमिमगान्माता मातरमप्यगाद्। भूयाम पुत्रैः पशुभिर्योऽस्मान् द्वेष्टि स भिद्यतामिति। तद्वा आत्मानं च यजमानं च स्वेन रसेन समर्द्धयति ॥ २१ ॥**

अथ पुनः यद्वै किंच यदपि शरावोदश्चनादिकं मृन्मयं पात्रं यज्ञे भिद्येत तद् भिन्नं पात्रं भूमिर्भूमिम् इत्यादिना मन्त्रेण अभिमृशेत्। अस्य मन्त्रस्य अयमर्थः—भूमिः विकारात्मिका भूमिः प्रकृतिभूतां भूमिं पृथिवीम् अगात्। अपि च, माता सर्वस्य जगतो निर्मात्री पृथिवी मातरं पृथिवीमेवागात्। द्यौः पिता पृथिवी माता (तै. ब्रा. 2.8.6.5) इति श्रुतेः। वयं तु पुत्रैः पशुभिश्च समृद्धा भूयाम भूयास्म। यः शत्रुः अस्मान् द्वेष्टि स भिद्यतां विदीर्यताम् इति। तद्वै तेनैव तदभिमर्शनेन आत्मानं च यजमानं च स्वेन रसेन यज्ञफलेन समर्द्धयति इति ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

---

1. Bh MI. भेदेन for भेदने; RS add इति after दर्शयति.

2. RS मृण्मयं for मृन्मयं.

9. M. सर्वमृदां K. समृदाभोगतां for सर्वस्य जगतो; MKI निर्मात्रीं for निर्मात्री.

## सप्तमः खण्डः

अर्थवादपुरःसरं सौम्यं चरुं विधत्ते--

घ्नन्तीव वा एतत्सोमं राजानं प्रेव मीयते । यदेनमभिषुण्वन्ति तस्यैतामनुस्तरणीं कुर्वन्ति यत्सौम्यं चरुम् । तस्मात् पुरुषाय पुरुषायानुस्तरणी क्रियते ॥ १ ॥

राजानं दीप्यमानमोषध्यधिपतिं वै सोमं घ्नन्तीव हिंसन्तीव । स च सोमः तेन प्रमीयते इव भवति । यद् यस्माद् एनं सोमम् अभिषुण्वन्ति । तस्याभिषुतस्य मृतप्रायस्य सोमस्य एतां प्रसिद्धाम् अनुस्तरणीं मृतस्य वैतरणीनद्युत्तारिका अनुस्तरणी तां कुर्वन्ति । यत् यस्मात् सौम्यं सोमदेवत्यं चरुं निर्वपन्ति । तस्मात् अत एव लोके पुरुषाय पुरुषाय सर्वस्मै मृतायानुस्तरणी क्रियते । वैतरणीनद्युत्तारिका गौर्दीयते । अतः सोमाभिषवनिमित्तं सौम्यं चरुं निर्वपेदित्यर्थः । तथा चाध्वर्युशाखायामाम्नायते घ्नन्ति वा एतत्सोमं यदाभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव तत् । यद्युत्तरार्धे वा मध्ये वा जुहुयात् । यदेवाभ्यां समदं दध्यात् दक्षिणार्धे जुहोति (तै. सं. ६. ६. ७. १) इत्यादि ॥ १ ॥

हुतशिष्टे पात्रस्थिते सौम्ये चरावाज्यं पूरयित्वा तदवेक्षणमर्थवादेन विधत्ते—

साध्यानां वै देवानां सत्रमासीनानां शर्करा अक्षसु जज्ञिरे । ते हेन्द्रमुपनिषेदुः । कथं नु तेषां शर्करा अक्षसु

---

6. Bh. प्रदीप्य० for दीप्य०; T ओषधीपतिं for ओषध्यधिपतिं.

7. RSIK. add इति after प्रमीयते; M. इति प्रभवतीति for इव भवति ; Bh MSIT. एवं for एनं.

14. R. तद्देवताभ्यः, K. एताभ्यां for यदेवाभ्यां.

जायेरन् यास्त्वं विद्या इति । तेभ्य एतत्सौम्ये चरौ श्यावमाज्यं प्रायच्छत् । तदवेक्षन्त । ते प्रापश्यन् । प्रपश्यत्यनन्धो भवति य एवं विद्वान्त्सौम्यं चरुम् अवेक्षते ॥ २ ॥

पुरा सत्रं बहुकर्तृकं द्वादशाहादिबहुदिनसाध्यं यागम् आसीनानाम् अनुतिष्ठतां साध्यानाम् एतन्नामकानां देवानाम् अक्षसु चक्षुष्षु शर्कराः सिकता जज्ञिरे जाताः । ते देवा इन्द्रमुपनिषेदुः उपागमन् । गत्वा चैवमवोचन् । तेषां सत्रमासीनानाम् अस्माकं चक्षुष्षु शर्कराः कथं नु जायेरन् । हे इन्द्र ! त्वं याः चक्षुष्षु उत्पन्नाः शर्करा विद्या जानीषे इत्येवंपृष्ट इन्द्रः तत्परिहाराय तेभ्यो देवेभ्यः सौम्ये चरावेतत् प्रसिद्धं श्यावम् आज्यं प्रायच्छत् । ततस्ते तदाज्यमवेक्षन्त । तदवेक्षणेन ते देवाः प्रापश्यन् । तेषां चक्षूंष्यपनीतशर्कराण्यभूवन्नित्यर्थः । अतो यः कश्चित् पुमानेवं विद्वान् जानन् सौम्यं चरुमाज्यपूर्णमवेक्षते स प्रपश्यति सम्यक् पश्यति, अनन्धश्च भवति । तस्माद्धुताशिष्टमाज्यपूर्णं चरुमवेक्षेतेत्यर्थः । अत्र विशेषो बह्वृचब्राह्मणे श्रूयते—प्रतिगृह्य सौम्यं होता पूर्वं छन्दोगेभ्योऽवेक्षेत तं हैके पूर्वं छन्दोगेभ्यो हरन्ति तत्तथा न कुर्यात् । वषट्कर्ता प्रथमं सर्वभक्षान् भक्षयतीति ह स्माह तेनैव रूपेण तस्माद्वषट्कर्तैव पूर्वोऽवेक्षेताथैनं छन्दोगेभ्यो हरन्ति (ऐ. ब्रा. 3. 32. 5. 6) इति ॥ २ ॥

प्रशंसापूर्वकं सेतिकर्तव्यताकं सौम्यचरुप्राशनं विधत्ते—

---

4. Bh SI. ॰हादिकं for ॰हादि॰.

8. BJ. पृष्टमात्र for पृष्ट इन्द्रः.

11. Bh J. ॰गत॰ for ॰नीत॰.

12. Bh J. आज्यं पुनर् for आज्यपूर्णम् ; Bh SJ. om. स प्रपश्यति... अवेक्षेतेत्यर्थः । ; R om. सम्यक्पश्यति.

13. M. ॰शेषम for शिष्टम् ; RJ. अवेक्षते for अवेक्षेत.

14. RSJ ॰वैक्षत for ॰वेक्षेत; SIK. हैव for हैके; Bh. पूर्वार्धे for पूर्वं.

15. RJ प्रथमः for प्रथमं; M. ॰भक्षणात् for भक्षान्.

16. M. यं for अथैनं.

18. PM. प्रशंसनं for प्राशनं see CN·

**योऽलमन्नाद्याय सन्नथान्नं नाद्याद्दक्षिणार्धं सदसो गत्वैतं सौम्यातिशेषं प्राश्नीयात् । जनं वा एतस्मादन्नाद्यं क्रामति । योऽलमन्नाद्याय सन्नथान्नं नात्ति जनोऽस्मात्पितरो जन्येनैवान्नेनान्नमत्ति । अन्नादो भवति ॥ ३ ॥**

यः पुमान् अन्नाद्याय अन्नादिभक्षणाय अलं समर्थः सन्नपि । अथशब्दोऽप्यर्थे । अन्नं नाद्यात् वागिन्द्रियात् (!) सदसो दक्षिणार्धं दक्षिणदिगर्धभागं गत्वा एतं सौम्यातिशेषं हुतशिष्टं सौम्यं चरुं प्राश्नीयाद् उद्गाता । तस्मादेव चरुभक्षणादन्नाद्यं जनं क्रामति प्राप्नोति । यो जनोऽलमन्नाद्याय समर्थः सन्नपि अन्नं नात्ति । किं च, अस्मात् प्राशनात् पितरोऽपि तृप्ता भवन्तीति शेषः । अतो जन्येन जनहितेन अन्नेन भक्षणयोग्येन एव अनेन अन्नमत्ति । हितान्नादनसामर्थ्येनैव अन्नमत्तीत्यर्थः । न केवलम् इह लोके, किं तु परत्रापि अन्नादो भवतीति ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे प्रथमाध्याये सप्तमः खण्डः ॥ ७ ॥

इति श्रीमद्राजाधिराजपमरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणव्याख्याने प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

6. Bh वारिश्चरीत्या, J. वालिशरीत्या, K. वारीन्द्रियात् for वागिन्द्रियात् see CN.

7. J. द्विजादिगम्यत्वात, Bh. दक्षिणदिगादिगम्यत्वा for दक्षिणादिगर्धभागम ; Bh एव होमाविशेष for एतं सौम्यातिशेषं.

8. RSI तमर्हादेव for तस्मादेव ; JBh. om. एव चरु० ; Bh. ०(अ) भक्षणात् for ०भक्षणात ; J adds तं after अन्नाद्यम .

9. M. अन्नादी for अन्नाद्याय; R. समृधः for समर्थः, M.Bh SI. om. समर्थः.

11. om. तत्क्षणात् सौम्येन, J भक्षणात् सौम्येन for भक्षणयोग्येन ; Bh. JM om. अनेन ; Bh. दानादन० for हितान्नादन०.

द्वितीयोऽध्यायः

# प्रथमः खण्डः

अथाग्निष्टोमे बहिष्पवमानधर्माः कथ्यन्ते । तत्र तावत् उपास्मै गायता नरः (सा. 651) इत्येतामाद्यामृचं साम्ना प्रच्छन्नां गायेदिति प्रशंसापूर्वकं विधत्ते—

प्रजापतिरकामयत बहुः स्यां प्रजायेयेति । स एतां रेतस्यामृचं साम्ना प्रच्छन्नामगायत् । यदृचमसाम्नीमगास्यदस्थ्यमांसमजनिष्यत । यत्सामानृचं मांसमनस्थिकमजनिष्यत ऋचं साम्ना प्रच्छन्नां गायति । तस्मात् पुरुषः प्रच्छन्नो मांसेन त्वचा लोम्ना जायते ॥ १ ॥

प्रजापतिः विधाता पुरैवम् अकामयत बहुः स्यां स्थावरजङ्गमात्मकत्वेन नानाविधोऽहं भवेयम् । तस्यैव विवरणं प्रजायेय इति । स एवं कामयित्वा रेतस्यां रेतस्या प्रथमा वधूः । तदन्वयादृगपि रेतस्या । तामुपास्मै गायता नरः (सा. 651) इत्येतामृचं साम्ना प्रच्छन्नां व्याप्ताम् अगायत् । यत् यदि कश्चित् ऋचम् असाम्नीं सामरहितामगास्यत् तर्हि तस्याम् ऋचि अमांसं मांसरहितम् अस्थि अजनिष्यत । ऋचमपुष्टामकरिष्यदित्यर्थः । किं च यद् यदि साम अनृचम् ऋग्वर्जितमगास्यत् तर्हि अनस्थिकम् अस्थिरहितं मांसम् अजनिष्यत । तत् साम निराधारमजनिष्यतेत्यर्थः । तस्मात् आद्यामृचं

3. K. om. अथ ; Bh J ०माने for ०मान०.
4. M. गायति for गायेद्.
6. M. Bh I बहु for बहुः.
11. M. वेधाः सः for विधाता.
15. RSI. om. अमांसं.
16. SI add तद् before ऋचम ; RSJ. अजनयद् for अकरिष्यद्.
17. R. ऋत्विग्वर्जितं, Bh J अशितम् for ऋग्वर्जितम्.
18. R. om. तत्.

साम्ना प्रच्छन्नां गायति गायेदित्यर्थः । यस्मादेवं तस्मात् लोके पुरुषो मांसेन त्वचा लोम्ना च प्रच्छन्नः सन् जायत इति ॥ १ ॥

रेतस्यायां त्रिरुद्ग्रहणं विधत्ते—

**त्रिरुद्गृह्णाति ॥ २ ॥**

पवमानायेन्दवे (सा. ६५१) इत्यत्र पकारवकारमकारेषु त्रिष्वक्षरेषु प्रत्येकं प्लुतं कुर्यादित्यर्थः । तथा च द्राह्यायणः—रेतस्यायास्त्रिरुद्गृह्णातीति ब्राह्मणं भवति । पावामानायेन्दावा (21.3.15; ला. 7.12.3) इति ॥ २ ॥

तत्प्रशंसति—

**त्रय इमे लोका एषां लोकानामवरुद्ध्यै त्रिभ्यश्च रेतः सिच्यते ॥ ३ ॥**

इमे प्रसिद्धाः पृथिव्यन्तरिक्षद्युलोकाः त्रयः एषां लोकानामवरुद्धयै प्राप्त्यर्थं त्रिरुद्गृह्णीयात् । अत एव च त्रिभ्यो रेतः सिच्यते ॥ ३ ॥

तत्र च हिंकारं निषेधति—

**न हिंकुर्यात् ॥ ४ ॥**

हिंकारनिन्दया तद्वर्जनं प्रशंसति—

**वज्रो वै हिंकारो बलमिव रेतो यद्धिंकुर्याद्वज्रेण हिंकारेण रेतः सिक्तं विच्छिन्द्यात् ॥ ५ ॥**

निगदसिद्धमेतत् ॥ ५ ॥

---

1. Bh. प्रतिच्छन्नां for प्रच्छन्नां.
2. M. om. च प्रच्छन्नः सन्.
3. R. रेतस्यायाः for रेतस्यायां; M. om. उद्ग्रहणं विधत्ते.
5. M. om. पवमानायेन्दवे.
7. Bh सवासमासनायेन्दवे, T वास्वासमासनायेन्दवे, S पप्रेवाप्रेमाप्रेयेन्दवे, I पाअ उवा अउमा अउना for पावामानायेन्दावा.
11. M. ०रिक्षं दिवः for ०रिक्षद्यु.
12. RKSI प्राप्त्यै for प्राप्त्यर्थं.
13. R. om. च; Bh J तत्रत्यं for तत्र च.
16. K. वज्यों० for वज्रो०; Bh. एव for इव.

नियमान्तरमाह—

**रेतस्या [गायत्री] छन्दसा। प्राजापत्या देवतया। सर्वमेतया ध्यायन् गायेत्। सर्वं हीदं रेतः॥ ६॥**

रेतस्या प्रथमा ऋक्। छन्दसा गायत्री। देवतया प्राजापत्या। प्रजापतिना गीतत्वात्। इत्येतत् सर्वं ध्यायन् एतया रेतस्यया गायेत्। हि यस्माद् इदं सर्वं रेतः। तथा च श्रूयते—प्रजापते रेतो देवाः। देवानां रेतो वर्षम्। वर्षस्य रेत ओषधयः (ऐ. आ. २१.३.१) इत्यादि॥ ६॥

रेतस्यायां सेतिकर्तव्यताकं गानं विधायेदानीं द्वितीयायाम् अभि ते मधुना पयः (सा. ६५२) इत्यस्यां गीयमानं विधत्ते—

**द्वितीयां गायति॥ ७॥**

गायेदित्यर्थः॥ ७॥

तत्र विशेषमाह—

**तस्या द्वे अक्षरे सशयनी व्यतिषजति। मध्यमस्य च पादस्योत्तममुत्तमस्य च प्रथमम्॥ ८॥**

तस्या ऋचो द्वे अक्षरे सशयनी सह शयाते इति सशयनी व्यतिषजति व्यतिषक्ते कुर्यात्। ते के अक्षरे इत्यत उक्तम् मध्यमस्य पादस्य इति। अथर्वाणो अशिश्रियुः (सा. ६५२b) इत्यस्य पादस्य उत्तमम् अन्त्याक्षरम्। उत्तमस्य देवं देवाय देवयुः (सा. ६५२c) इत्यस्य च प्रथमम् अक्षरम्। तथा च

---

2. [गायत्री] See CN.

5. RKSI. गीयमानत्वात् for गीतत्वात्; M. adds प्राजापत्या after गीतत्वात्; RJ. इत्येवं, M. इत्येतया, T कृत्येतत्, SI प्रत्येतत् for इत्येतत्.

6. MTKI om. देवाः.

7. Bh om. वर्षं.

8. J रेतस्यायाः for रेतस्यायां; M. ०कर्तव्यतां गानं च. for ०कर्तव्यताकं गानं.

15. R. तस्यामृचि for तस्या ऋचः; Bh. om. ऋचो...शिश्रयुरित्यस्य; R. om. सशयनी; MT शयनी for सशयनी; J om. सह शयाते इति सशयनी.

16. RTJK. om. इति; M. उत्तमम् for उक्तम; SIK. om. पादस्य; K. adds यया before अथर्वणो०,

17. M. पदस्य for पादस्य; M मध्यमस्य च for इत्यस्य; BhJ. अन्त्यमक्षारम् for अन्त्या०.

द्राह्यायणो गानेन व्यतिषङ्गं दर्शितवान्। अथर्वाणो आश्श्रदे२युर्वन्दे वायदा (सा. ६५२^bc) (२१.३.१९; ला. ७.१२.४) इति ॥ ८ ॥

एतत्प्रशंसति—

**व्यतिषक्तौ प्राणापानौ प्रजा दधतः ॥ ९ ॥**

स्पष्टोऽर्थः ॥ ९ ॥

गाने नियमं दर्शयति—

**गायत्री छन्दसाग्नेयी देवतया। पृथिवीमेतया ध्यायन् गायेत् ॥ १० ॥**

छन्दसा गायत्री देवतया आग्नेयीति। अग्न्यधिष्ठानरूपां पृथिवीं च ध्यायन् एतया गायेत् ॥ १० ॥

अथ स नः पवस्व शं गवे (सा. ६५३) इत्यस्यां तृतीयायां गानं विधत्ते—

**तृतीयां गायति ॥ ११ ॥**

गायेदित्यर्थः ॥ ११ ॥

गानविशेषमाह—

**तां बलवदिवोरसेव गायति ॥ १२ ॥**

ताम् ऋचं बलवदिव प्रयत्नवदिव उरसा स्थानेनैव गायेदित्यर्थः १२ ॥

विशेषान्तरमाह—

**तस्या द्वे उत्तमार्धेऽक्षरे द्योतयति ॥ १३ ॥**

तस्या ऋचः उत्तमार्धे द्वे अक्षरे द्योतयति। एतद् ब्राह्मणमनूद्य द्राह्यायणो मतभेदेन व्याचकार। तस्या द्वे उत्तमार्धे अक्षरे द्योतयतीति

---

4. Bh. प्रत्यक्षा for प्रजा.

5. RJS. स्पष्टा० for स्पष्टोऽ०.

17. MTK प्रबल० for बल०; MBhK. उरसः for उरसा; J उरः-स्थानेनेव for उरसा स्थानेनैव.....

18. Bh J. उद्गायेद् for गायेद्.

21. SI om. तस्या ऋचः...द्योतयति Bh उत्तमार्धेति सार्धे चे द्वे, M उत्तरार्धेति सार्द्धे द्वे द्वे for उत्तमार्धे द्वे; MTSIK. तद् for एतद्; M अनुगानाद्, SI. अनु K Bh अनुगं for अनूद्य.

ब्राह्मणं भवति ये ऊर्ध्वं हिंकारात्ते निर्ब्रूयादिति गौतमः षाधा इति धानंजय्यः (२१.३.२१.२३ ; ला ७.१२.६९) इति । शं राजन् (सा. ६५३०) इत्यर्धे हिंकारादूर्ध्वं यदक्षरद्वयं तन्निरुक्तं गेयमिति गौतमस्य मतम् । हिंकारात् पूर्वं षाधा इत्यक्षरद्वयं निरुक्तं गेयमिति धानंजय्यमतमिति ॥ १३ ॥

तत्प्रशंसति—

चक्षुरेव तद्युनक्ति तस्माद्युक्तं चक्षुः ॥ १४ ॥

तत् तेन अक्षरद्वयद्योतनेन चक्षुरेव प्राणत्वेन युनक्ति । तस्मात् तत एव चक्षुः युक्तं संबद्धमेव भवति ॥ १४ ॥

अत्रापि गाने नियममाह—

त्रिष्टुप् छन्दसैन्द्रीदेवतयान्तरिक्षमेतया ध्यायन् गायेत् ॥ १५ ॥

पूर्ववद्व्याख्येयम् ॥ १५ ॥

अथ दविद्युतत्या रुचा (सा. ६५४) इत्यस्यां गानं विधत्ते—

चतुर्थी गायति ॥ १६ ॥

अत्र गाने विशेषमाह—

तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्या द्वादशेभ्योऽक्षरेभ्यः ॥ १७ ॥

---

2. Bh MTJ om. शं राजन्.

3. M ०रूपं for द्वयं; J Bh. ०क्षरं निरुक्तं for ०क्षरद्वयं तन्निरुक्तं.

5. TI. धानंजय्यस्य for धानंजय्य०.

9. RSI. युक्तम् for ततः; M. युक्तसंबन्धः for युक्तं संबद्धम ... ; RSI. संबन्धम् for संबद्धम्.

16. KT. गान० for गाने; J. om. गाने.

17. Bh MT निक्रीडन् for निक्रीडयन्.

द्वादशाक्षरपर्यन्तं तस्या ऋचः चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव नितरां क्रीडयन्निव विरम्य गायेदित्यर्थः ॥ १७ ॥

ततः स्तौति—

**द्वादशाक्षरपदा जगती । पशवो वै जगती । पशुष्वेव प्रतितिष्ठति ॥ १८ ॥**

जगती द्वादशाक्षरपदा । स्पष्टमन्यत् ॥ १८ ॥

तत्र एव विशेषान्तरमाह—

**तस्याश्चत्वार्युत्तमार्धेऽक्षराणि द्योतयति ॥ १९ ॥**

तदेतदनूद्य मतभेदेन व्याचष्टे सूत्रकारः—तस्याश्चत्वार्युत्तमार्धेऽक्षराणि द्योतयतीति ब्राह्मणं भवति । द्वे पुरस्ताद्धिंकारात् तथोपरिष्टादिति गौतम इति । सोमः शुक्रा इति धानंजय्यः (द्रा. २१.३.२४.२६; ला. ७.१२.१०-१२) इति । स्पष्टोऽर्थः ॥ १९ ॥

तत्प्रशंसति—

**श्रोत्रमेव तद्युनक्ति । तस्माद्युक्तं श्रोत्रम् । श्रोत्रे द्वे प्रतिश्रवणे द्वे । तस्मात् पुरुषः सर्वा दिशः शृणोति । अपि पराङ् यन् प्रत्यङ् शृणोति ॥ २० ॥**

तत् तेनाक्षरचतुष्टयद्योतनेन श्रोत्रमेव प्राणत्वेन युनक्ति । तस्मात् तत एव श्रोत्रं युक्तं चतुष्टसंख्यया । कथम्? द्वे श्रोत्रे उपाधिभेदेन तथा

---

1. J. om. चत्वारि चत्वार्यक्षराणि; Bh MT. निक्रीडन् for निक्रीडयन्.
2. MTI निरन्तरं for नितरां; Bh om. नितरां क्रीडयन्निव; S. om. नितरां...गायेदित्यर्थः ।

RI after गायेदित्यर्थः add:—तदाह सूत्रकारः—तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्या द्वादशभ्योऽपरेभ्य इति ब्राह्मणं भवति परिष्टो भान्ताया (I. भां आ उन्तायां) कृपा (I. ०पा अ) इति.

4. M. पदाक्षरा for अक्षरपदा.
7. M तदत्र for तत्र.
11. R J om. इति after गौतमः.
12. RTJ. स्पष्टा० for स्पष्टो०.
17. Bh adds तद् after तेन.
18. RSI युक्तम् for ततः; Bh I श्रोत्रत्वं for श्रोत्रं; RSI चतुर्षु चतुःसंख्यादिकं for चतुष्टसंख्यया । कथम्?.

प्रतिश्रवणे प्रतिध्वनी इत्येवम् । यत एवं तस्मात् पुरुषः सर्वा दिशः शृणोति । सर्वासु दिक्षु वर्तमानान् शब्दान् शृणोतीत्यर्थः । तस्य विवरणम्—पराङपि यन् गच्छन् प्रत्यङ्ङपि सर्वतः शृणोति ॥ २० ॥

गाने नियममाह—

**जगती छन्दसा । सौरी देवतया । दिवमेतया ध्यायन् गायेत् ॥ २१ ॥**

पूर्ववद्व्याख्येयम् ॥ २१ ॥

अथ हिन्वानो हेतृभिर्हितः (सा. ६५५) इत्यस्यां गानं विधत्ते—

**पञ्चमीं गायति ॥ २२ ॥**

तत्र विशेषमाह—

**तां निनर्दन्निव गायति ॥ २३ ॥**

तां चतुर्धा व्यावृत्य गायेदिति वचनाच्चतुःखण्डां पञ्चमीं कुर्यात् । हिंकारादूर्ध्वमेकः । त्रयः पूर्वे खण्डाः । तत्र पूर्वेषु त्रिष्वपि खण्डेषु अन्त्यमक्षरं निनर्देदित्यर्थः ॥ २३ ॥

तत्प्रशंसति—

**आह बहुतमात्पुरुषादन्नमत्ति । अन्नादो भवति । य एवं वेद ॥ २४ ॥**

---

2. RJ तस्यैव for तस्य; M पराञ्चि प्रत्यञ्चि विष्वगपि, J परागपि यन् गच्छन प्रत्यङ्शब्दानपि for पराङपि...सर्वतः.

7. Bh J om. पूर्ववद्व्याख्येयम्.

10. J om. तत्र विशेषमाह...वचनात् (L. 12).

12. Bh M. चतुर्षु for चतुः; J नानाचतुरवनर्दां for चतुःखण्डा; Bh JT पञ्चमी for पञ्चमीं; Bh J. कार्या for कुर्यात्: T om. कुर्यात्.

13. M. एकं for एकः, M. om. पूर्वे खण्डा; M. om. तत्र and अपि; M. अपरखण्डेषु, J अत्रनर्देषु for खण्डेषु; R. om. खण्डेषु.

15. Bh. किं च य एवं वेद सोऽप्यन्नादो भवति य एवं वेदेत्याह for तत्प्रशंसति.

आह य एवं निनर्दन् गायति स बहुतमात् पुरुषात् बहुसंततिपर्यन्तमन्नमत्तीत्यर्थः । किं च, य एवं वेद सोऽपि अन्नादो भवति ॥ २४ ॥

तत्रैव विशेषान्तरमाह—

**निरुक्तां चानिरुक्तां गायति ॥ २५ ॥**

तामृचमंशभेदेन निरुक्तामनिरुक्तां च गायेत् । अयमर्थः । अस्य चत्वारो गीतिखण्डाः । तान् क्रमेण निरुक्तमनिरुक्तमित्येवं व्यत्यासं गायेदिति । तथा च द्राह्यायणः—तस्याः द्वितीयं पादं निर्ब्रूयात् । तृतीये चाक्षरे पञ्चमषष्ठे (ला. श्रौ. सू. ७. १३. ३.) इति । अस्यार्थः—अस्याः द्वितीयं पादं निरुक्तं गायेत् । तृतीये पादे प्रथमं चतुरक्षरमनिरुक्तं पुनः पञ्चमषष्ठे निरुक्ते गायेत् । हिंकारादूर्ध्वं पुनरप्यनिरुक्तमित्येवं व्यत्यासं गायेदिति ॥२५॥

तत्प्रशंसति—

**निरुक्तेन वै वाचो भुञ्जतेऽनिरुक्तमस्या उपजीवन्ति । भुङ्क्ते वाचमुपैनां जीवति । य एवं वेद ॥ २६ ॥**

अस्या ऋचो निरुक्तेनैव वाचो वाक्फलं भुञ्जते । किं च, अस्या अनिरुक्तं तत्कार्यम् उपजीवन्ति । यश्चैवं वेद सोऽपि वाचं भुङ्क्ते । एनामुपजीवति च ॥ २६ ॥

---

1. M. एव निनर्दे for एवं निनर्दन्; RSI. add बहु before पुरुषात्.
4. RK निरुक्तं...रुक्तं for निरुक्तां...रुक्तां.
5. J om. अंशभेदेन ; RI. अथ, Bh J तस्य for अस्य.
6. Bh गाति०, T गार्थी०, SI उद्गीथे for गीति०; J गीतिरवनर्दाः । तान्निनर्दयन् for गीतिखण्डाः । तान ; R om. इति; Bh J om. एवं.
7. TSI पदं for पादं.
10. Bh. om. निरुक्ते; Bh om. इत्येवं व्यत्यासं गायेद् ; MTI om. गायेद्.
13. Bh. om. जीवति.
14. RI om. वाक्फलं; J अस्याम् ऋचि निरुक्तत्वेनैव अत्रत्योक्तं निरुत्पन्नैरुत्पन्नैर्वाक्यालम्बनं, Bh. अस्यान्वयो निरुत्या(!)—रुत्यनैव for अस्या... वाक्फलं ; S. वाचो भुञ्जते वाक्फलं भुञ्जते for वाचो...भुञ्जते ; R Bh JKT अस्यानिरुक्तं for अस्या अनिरुक्तं.
15; J. तत्कार्येषु for तत्कार्यम्.
16. Bh MT add यः before एनाम्.

अत्र नियममाह—

**अनुष्टुप् छन्दसा । प्राजापत्या देवतया । सर्वमेतया ध्यायन् गायेत् । सर्वं हीदं प्राजापत्यम् ॥ २७ ॥**

एषा छन्दसा अनुष्टुप् । खण्डचतुष्टं पादचतुष्टमिति चतुष्टमाम्यात् । देवतया प्राजापत्या । सर्वम् एव ध्यायन् एतया गायेत् । हि यस्मात् इदं सर्वं जगत् प्राजापत्यं प्रजापतिसंबन्धीति ॥ २७ ॥

अथ ऋधक् सोम स्वस्तये (सा. ६५६) इत्यस्यां गानं विधत्ते—

**षष्ठीं गायति ॥ २८ ॥**

अत्र विशेषं दर्शयति—

**तस्या द्वे द्वे अक्षरे उदासं गायत्या षड्भ्योऽक्षरेभ्यः ॥ २९ ॥**

तस्या ऋचो द्वे द्वे अक्षरे आ षड्भ्योऽक्षरेभ्यः षडक्षरपर्यन्तम् उदासं गायेत् । तदेव मतभेदेन दर्शितवान् सूत्रकारः—संजाग्मानोदाइवाकाग्रा इति धानंजय्यः इति । कावा इति शाण्डिल्यः इति (२१. ४. ७; ला. ७. १२.५.६) ॥ २९ ॥

तदक्षरसंख्यां प्रशंसति—

**षडृतव ऋतुष्वेव प्रतितिष्ठति ॥ ३० ॥**

षट्सु एव वसन्तादिषु ऋतुषु सर्वं प्रतितिष्ठति । ऋतुरूपेण विभिन्नस्य कालस्य सर्वोत्पत्तिनिमित्तकारणत्वात् ॥ ३० ॥

---

4. TRSI. एषां छन्दसाम् for एषा छन्दसा; Bh J छन्दः for खण्ड; RSI ०चतुष्टयं M. ०चतुष्कं for ०चतुष्टं; J adds भूतभविष्यद्वर्तमानतया after ०खण्डचतुष्टं; RSI चचुष्टय०, M चतुष्क० for चतुष्ट०; K च त्रिषुष्टुप [...] प्राजापत्या for चतुष्ट. . .प्राजापत्या.

5. T एवं, JI एतया for एव; RJ om. एतया.

13. TJ ०दायि० for ०दाइ०; MK. कवा for कावा.

14. TJSI. कवा for कावा.

16. Bh J गायति for प्रशंसति and J adds तत् प्रशंसति thereafter.

18. RSI विभिन्न for विभिन्नस्य; M. विभिन्नाकारस्य for विभिन्नस्य कालस्य.

अत्रापि नियममाह—

**पङ्क्तिश्छन्दसा । सौमी देवतया । दिश एतया ध्यायन् गायेत् ॥ ३१ ॥**

पूर्ववद्व्याख्येयम् ॥ ३१ ॥

एवं सर्वास्वृक्षु गानं विधाय क्वचित्तदनूद्य फलदर्शनेन स्तौति—

**इहेव च वा एष इहेव च मनसा गच्छति । यो गायत्रे प्रातःसवने त्रिष्टुभं गायति जगतीं गायत्यनुष्टुभं गायति पङ्क्तिं गायति । आस्ते ॥ ३२ ॥**

यो गायत्रे गायत्रीछन्दोयुक्ते प्रातःसवने त्रिष्टुभं तृतीयामृचं गायति जगतीं चतुर्थीं गायति अनुष्टुभं पञ्चमीं गायति षष्ठीं पङ्क्तिं गायति । एष सोऽयं इहेव इहैव । चकारात् परत्रापि । द्विरुक्तिरादरार्था । मनसा गच्छति संकल्पेनैव चाभीष्टानि प्राप्नोतीत्यर्थः । अन्ते (आस्ते?) प्रतितिष्ठति चेत्यर्थः ॥ ३२ ॥

गायत्रे द्वे इति दर्शयति—

**गायत्रे द्वे गायति ॥ ३३ ॥**

तत्फलं दर्शयति—

**प्राणमेव तदभ्येति । प्राणो हि गायत्रम् । पन्थानमेव तदभ्येति । पन्था हि गायत्रम् ॥ ३४ ॥**

---

6. MS इहैव for इहेव.

8. J takes आस्ते to the next Sutra.

11. RSI. साम, K. सोमम् for सोऽयम्; KSI. आदरात् for आदरार्था.

12. Bh J. om. अन्ते प्रतितिष्ठति चेत्यर्थः ।

14. RI गायत्र्यो निदर्शयति J Bh. गायत्रे (Bh गायत्र्ये) गानं दर्शयति, T. गायत्र्योर्गानं दर्शयति for गायत्रे द्वे . . .

15. J. adds आस्ते before गायत्रे ; BhMSI. गायत्रं for गायत्रे.

तत् तेन च द्वयोर्गानेन प्राणमेवाभ्येति । हि यस्मात् प्राणो गायत्रम् । तथा चोक्तं पुरस्तात् प्राणो गायत्रीति । किं च, तेन पन्थानं क्रतुफलमार्गमेवाभ्येति । हि यस्मात् गायत्रं पन्थाः । क्रत्वङ्गत्वात् ॥ ३४ ॥

बहिष्पवमाने विशेषान्तरं विधत्ते—

**रथन्तरवर्णामुत्तमां गायति ॥ ३५ ॥**

उत्तमाम् ऋचं रथन्तरवर्णां, रथन्तरस्येव वर्णचतुष्टयं यस्याः सा रथन्तरवर्णा, तां गायेत् । अत्र विशेषान्तरमाह द्राह्यायणः—तस्या ऊर्ध्वं प्रस्तावाच्चत्वार्यक्षराण्यभिष्टोभेत् (३.४.२५; ला. १.१२.११) इति । तस्यायमर्थः । तस्याः रथन्तरवर्णायाः उत्तमायाः प्रस्तावादूर्ध्वमुद्गीथस्यादितश्चतुरक्षरं रथन्तरवद्धकारैरभिष्टोभेद् इति ॥ ३५ ॥

तत्प्रशंससि—

**इयं वै रथन्तरमस्यामेव प्रतितिष्ठति ॥ ३६ ॥**

इयमेव ऋक् रथन्तरम् । तद्धर्मकत्वात् । किं च, अस्यामेव ऋचि सामनि च प्रतितिष्ठतीति । यद्वा, अस्यां गीयमानायाम् एव यजमानः प्रतितिष्ठति यज्ञफलं लभत इति ॥ ३६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे द्वितीयाध्याये प्रथमः खण्डः

---

1. M. तत्त्वेन च यो for तत् तेन च द्वयोर्; M. om. हि यस्मात्... गायत्रम्; J. om. प्राणो...हि यस्मात्.

2. R. गायत्रम् for गायत्रीति; R adds गायत्रं after पन्थानं.

4. Bh J add अपि after ०माने.

5. RSI गायेत् for गायति.

6. MTSK. रथन्तरवर्णस्येव for रथन्तरस्येव; K. चतुष्टयं for वर्णचतुष्टयं; Bh J om. रथन्तरस्येव. . .०वर्णा तां.

7. MTSK om. तस्या.

9. Bh J ०वर्णोत्तमायाः for ०वर्णाया उत्तमायाः; TS ०दित्यस्या०, K. ०दित्य० for ०दित०

10. M. ०वर्णैः for ०वद्.

14. MSI साम्नि for सामनि, K. इव, BhT वि for च.

# द्वितीयः खण्डः

अथैतास्वृक्षु विधास्यमाने धूर्गाने बहिष्पवमाने तासामानुलोम्यं विधत्ते—

**ता वा एता देवलोकाय युज्यन्ते यत्पराच्यः ॥ १ ॥**

ता एवैता ऋचो देवलोकाय युज्यन्ते समर्था भवन्ति । यत् येन पराच्यः आनुलोम्येन गीयन्ते इत्यर्थः ॥ १ ॥

अथ आज्यस्तोत्रेषु तासां प्रातिलोम्यं विधत्ते—

**प्रतीच्यो मनुष्यलोकाय ॥ २ ॥**

येन प्रतीच्यः प्रत्यङ्मुखाः प्रातिलोम्ययुक्ता भवन्ति तेन मनुष्यलोकाय युज्यन्ते । देवलोकापेक्षया मनुष्यलोकस्य प्रत्यग्भूतत्वात् ॥ २ ॥

प्रशंसापूर्वकं धूर्गानं विधत्ते—

**एष वाव जात एषोऽवलुप्तजरायुरेष आर्त्विजीनो यस्य धुरो गीयन्ते यश्चैवं विद्वान् धुरो गायति । जातमेवैनमन्नाद्याय परिवृणक्ति । उभावन्नमत्त उद्गाता च यजमानश्च ॥ ३ ॥**

यस्य बहिष्पवमानस्य संबन्धिनो धुरो येन गीयन्ते । गायत्रगीतेरेव केवलविकारा धुरः तद्योगादृचोऽपि धुर इत्युच्यन्ते । एष वाव अयमेव जातः जन्मफलवान् एषोऽवलुप्तजरायुः । जरायुर्गर्भवेष्टनं तद्रहितः । अज्ञानरहित इत्यर्थः । अत एष एव आर्त्विजीन ऋत्विक्कर्मार्हः । किं च । एवं विद्वान् जानन् धुरो गायति तं जातम् एवमन्नाद्याय परिवृणक्त्येव । तद्गानमन्नभक्षणाय समर्थं करोतीत्यर्थः । किं च उद्गाता यजमानश्चेत्युभावप्यन्नमत्तः ॥ ३ ॥

---

2. SRI. ०मान, M. ०मानं for माने; M. ०ष्पवमानेन सामानु० for ०ष्पवमाने तासामानु०; RSI. ०लोमं for ०लोम्यं.

4. Bh J. om. ता एवैता...युज्यन्ते ; SIRM यद्येनाः, Bh T यद्येनं पराच्यम for यत् येन पराच्यः.

5. R Bh SI. गीयते for गीयन्ते.

तत्र प्रथमाया गाने विशेषमाह—

**या प्रथमा तामन्नाद्यं ध्यायन् गायेत् ॥ ४ ॥**

तत्र या प्रथमा धूस्तामन्नाद्यं भूयादिति ध्यायन् गायेत् ॥ ४ ॥

तत्प्रशंसति—

**रेतस एव तत्सिक्तायान्नाद्यं प्रतिदधाति ॥ ५ ॥**

तत् तेन ध्यानपूर्वकेण गानेन रेतसस्सिक्ताय सेकायैव प्रजोत्पत्त्यर्थमेवेत्यर्थः । अन्नाद्यं प्रतिदधाति धारयतीत्यर्थः ॥ ५ ॥

तत्र हिंकारं प्रतिषेधति—

**न हिंकुर्यात् ॥ ६ ॥**

हिंकारनिन्दया तद्वर्जनं प्रशंसति—

**यद्धिंकुर्याद्वज्रेण हिंकारेण रेतस्सिक्तं विच्छिन्द्यात् ॥ ७ ॥**

व्याख्यातमेतत् ॥ ७ ॥

तस्याः छन्दःप्राणौ दर्शयति—

**रेतस्या छन्दो युज्यते । मनो धीयते ॥ ८ ॥**

छन्दो रेतस्या प्रथमा गायत्री युज्यते । मनश्च प्रजापतिना प्राणत्वेन धीयते ॥ ८ ॥

अस्य द्वितीयस्यामृचि गाने विशेषमाह—

**या द्वितीया तां गायत्रीमागां गायंस्तस्या द्वे अक्षरे सशयनी व्यतिषजति । मध्यमस्य च पदस्योत्तममुत्तमस्य च**

---

6. J. रेतसे for रेतसः; R J add रेतः before सेकाय; MBh ०त्पत्तिम्, J ०त्पत्तये for ०त्पत्त्यर्थम्.

13. Bh तस्यां for तस्याः; J छन्देरेतस्यां for छन्दःप्राणौ.

14. Bh रेतस्यां for रेतस्या.

15. MT. रेतस्याः, K. रेतस्यां for रेतस्या.

16. RSI. निधीयते for धीयते.

17. KRSI अद्य. J अथ for अस्य.

**प्रथमम् । व्यतिषक्तौ प्राणापानौ प्रजा दधतो गायत्री छन्दो युज्यते । प्राणापानौ धीयेते ॥ ९ ॥**

तस्य बहिष्पवमानस्य या द्वितीया तामागां गेयत्वेन प्राप्तां गायत्रीं गायन् । उद्गाता तस्या ऋचो द्वे अक्षरे सशयनी । सह शयात इति सशयनी । व्यतिषजति । कथं? मध्यमस्य च पदस्य उत्तमम् अक्षरम् उत्तमस्य च पदस्य प्रथमम्--अथर्वाणो अशिश्रादेयुर्वन्देवायदा (सा. 562bc) इति । अन्यत् पूर्ववत् ॥ ९ ॥

तृतीयायां विशेषानाह—

**या तृतीया तां त्रिष्टुभमागां गायंस्तस्या द्वे उत्तमार्धेऽक्षरे द्योतयति । चक्षुरेव तद्युनक्ति । तस्माद्विरूपं चक्षुः कृष्णमन्यच्छुक्लमन्यत् त्रिष्टुप् छन्दो युज्यते । चक्षुषी धीयेते ॥ १० ॥**

या तृतीया तां त्रिष्टुभं गायन् । तस्या अन्तिमार्धर्चे हिङ्कारात् पूर्वम् ऊर्ध्वं वा द्वे अक्षरे द्योतयति । निरुक्तं गायेदित्यर्थः । स्पष्टमन्यत् ॥ १० ॥

चतुर्थ्यां विशेषान् दर्शयति--

**या चतुर्थी तां जगतीमागां गायंस्तस्याश्चत्वार्युत्तमार्धेऽक्षराणि द्योतयति । श्रोत्रमेव तद्युनक्ति । तस्माद्युक्तं श्रोत्रम् । श्रोत्रे द्वे प्रतिश्रवणे द्वे । तस्मादपि पराङ् यन् प्रत्यङ् शृणोति । जगती छन्दो युज्यते । श्रोत्रे धीयेते ॥ ११ ॥**

---

3. Bh MTKI om. बहिष्पवमानस्य; RKMI प्राप्तौ for प्राप्तां.

6. RTKSI पादस्य for पदस्य; RJ Bh आशिश्रयुर्देवं देवाय देवयुः for अशिश्रादेयुः...दा; S. Corrupt.

8. J om. तृतीयां...आह; Bh. विशेषानाह.

14. Bh J om. पूर्वं; TK. om. ऊर्ध्वं.

तां जगतीमागां गायन् तस्या उत्तमार्धे चत्वारि अक्षराणि । हिंकारात् पूर्वं द्वे उपरिष्टाद् द्वे अक्षरे इति चत्वारि । सोमाः शुक्रा इति वा चत्वार्यक्षराणि । द्योतयति । अन्यद्व्याख्यातम् । पूर्वखण्डेऽभिहितस्यार्थस्यात्राभिधानेन न पुनरुक्तिदोषः । विशेषान्तरविधानायानूद्यमानत्वात् ॥ ११ ॥

पञ्चम्यां विशेषानाह—

**या पञ्चमी तामनुष्टभमागां गायंश्चतुर्धा व्यावृज्य गायेत् । चतुर्धा वा इदं पुरुषो वीर्याय विकृतो जायते । वीर्यायैवैनां तद्व्यावृज्य गायति । उच्चावचामिव गायेत् । उच्चावचैव हि वाक् । संक्ष्णुत्येव गायेत् । संक्ष्णुत्येव हि वाचं पुरुषो वदति । अनुष्टुप् छन्दो युज्यते । वाग् धीयते ॥१२॥**

या पञ्चमी तामनुष्टुभमागां गेयत्वेन प्राप्तां गायन् । चतुर्धा व्यावृज्य चतुष्खण्डां कृत्वा गायेत् । यत एव लोके इदं प्रसिद्धं [यत्] पुरुषः चतुर्धा पादमध्यहस्तशिरोरूपैश्चतुर्भिर्भागैः विकृतः सन् वीर्याय जायते समर्थो भवतीति । तत एव एनाम् अनुष्टुभमृचं चतुर्धा व्यावृज्य वीर्याय बलार्थमेव गायति । किं च, उच्चावचामिव एतामृचमंशभेदेन निरुक्तामनिरुक्तामिव गायेत् । हि यस्मात् वाक् उच्चावचैव व्यवहाराय भवति । अपि च, संक्ष्णुत्येव क्ष्णुने जने निशितामेव गायेत् । हि यस्मात् पुरुषो लोके संक्ष्णुत्येव विस्पष्टमेव यथा भवति तथा वाचं वदति । किं च, अत्र अनुष्टुप् छन्दो युज्यते । वाक् प्राणत्वेन धीयते । प्रजापतिनेति शेषः ॥ १२ ॥

---

3. J trans. उत्तमार्धे after अक्षराणि.

8. M Bh JRSI व्यावृत्य for व्यावृज्य.

11. Bh J om. अनुष्टुभम्...प्राप्तां.

12. J चतुरवनदां for चतुष्खण्डां ; RTSI add अयं SK यं after इदं.

15. RSI ताम् for एताम्; RI मतभेदन, KS अभेदेन for अंशभेदेन. RI. निरुक्तानिरुक्तम् for निरुक्ताम०...

17. J निशितम् for निशिताम्.

अथ षष्ठ्यां विशेषान् दर्शयति—

**या षष्ठी तां पङ्क्तिमागां गायंस्तस्या द्वे द्वे अक्षरे उदासं गायत्याषड्भ्योऽक्षरेभ्यः । षड्ृतवः ऋतुष्वेव प्रतितिष्ठति । पङ्क्तिश्छन्दो युज्यते । समानोदानौ धीयेते ॥ १३ ॥**

एषा ऋक् छन्दसा पङ्क्तिः ज्ञेयेत्यर्थः । समानोदानौ प्राणत्वेन धीयेते । शिष्टं व्याख्यातचरमिति ॥ १३ ॥

अथ बहिष्पवमाने धुरो निधनानि कथ्यन्ते । तत्र रेतस्याया निधनं दर्शयति—

**सदिति प्रथमाया धुरो निधनम् । रेतसो ह्यधि सज्जायते ॥ १४ ॥**

प्रथमाया धुरो सदिति निधनं कुर्यात् । हि यस्मात् रेतसोऽधि । अधिशब्दः सप्तम्यर्थद्योतनार्थः । रेतसि सद्रूपेण जगत् जायते ॥ १४ ॥

द्वितीयाया निधनं दर्शयति—

**समिति द्वितीयायाः । रेतसो ह्यधि संभवः ॥ १५ ॥**

समिति निधनं द्वितीयस्याः कुर्यात् । हि यस्मात् रेतसो अधि विश्वस्य संभवः इत्यर्थः ॥ १५ ॥

तृतीयायाः निधनं दर्शयति—

**स्वरिति तृतीयायाः । प्र स्वर्गं लोकं जानाति ॥ १६ ॥**

स्वरिति तृतीयाया निधनं कुर्यात् । तेन स्वर्गं लोकं प्रजानाति ॥ १६ ॥

---

1. RTKJ षष्ठ्या for षष्ठ्यां.
5. Bh TJ add अत्र पङ्क्तिश्छन्दो युज्यते after धीयेते.
6. Bh I छन्दसां for छन्दसा; J adds सा after पङ्क्तिः,
12. ṚKṢI. om. धुरो.

चतुर्थ्या निधनमाह—

**इडेति चतुर्थ्याः । पशवो वा इडा । पशुष्वेव प्रतितिष्ठति ॥ १७ ॥**

इडेति चतुर्थ्या निधनं कुर्यात् । पशवः खलु इडा भोग्यत्वात् । तेन पशुष्वेव प्रतितिष्ठति । पशुमान् भवतीत्यर्थः ॥ १७ ॥

पञ्चम्या निधनं विधत्ते—

**वागिति पञ्चम्याः । सर्वा अस्मिन् पुण्या वाचो वदन्ति ॥ १८ ॥**

पञ्चम्या ऋचो वागिति निधनं कुर्यात् । तेनास्मिन् निधनस्य कर्तरि सर्वाः प्रजाः पुण्याः स्तुतिरूपा वाचो वदन्ति ॥ १८ ॥

यथोक्तस्य वेदितारं प्रशंसति—

**य एवं वेद ॥ १९ ॥**

यः पुमान् एवं निधनानि वेद सोऽपि यथोक्तफलं लभत इति शेषः ॥ १९ ॥

अथ तास्वेव धर्मान्तराणि कथ्यन्ते । तत्र प्रथमायां तावद् विशेषमाह—

**या प्रथमा तामायच्छन्निव गायेत् । आयत इव ह्ययमवाङ् प्राणः ॥ २० ॥**

या प्रथमा तामायच्छन् प्लुतोच्चारणेन विस्तारयन्निव गायेत् । हि यस्मात् अयं प्रसिद्धोऽवाङ् अधोवर्ती प्राण आयत इव भवति ॥ २० ॥

द्वितीयायां धर्मान्तरं विधत्ते—

**या द्वितीया तां घोषिणीमिव गायेत् । घोषीव ह्ययमपानः ॥ २१ ॥**

घोषिणीं घोषवतीमिव गायेत् । स्पष्टमन्यत् ॥ २१ ॥

---

10. Bh स्थानि०, J. स्वभि० for स्तुति०; R om. ०रूपा.

तृतीयायां धर्मान्तरं विवक्ते—

**या तृतीया तामुद्यच्छन्निव गायेत् । उद्यत इव ह्ययं प्राणः ॥ २२ ॥**

उद्यच्छन् प्रयत्नेनोर्ध्वं गमयन्निव । व्याख्यातप्रायमन्यत् ॥ २२ ॥

चतुर्थ्यां धर्मान्तरमाह—

**या चतुर्थी तां निक्रीडयन्निव गायेत् । निक्रीडित इव ह्ययं व्यानः ॥ २३ ॥**

व्याख्यातचरमेतत् ॥ २३ ॥

पञ्चम्यां धर्मान्तरमाह—

**या पञ्चमी तां निरुक्तामनिरुक्तामिव गायेत् । निरुक्तोऽनिरुक्त इव ह्ययं समानः ॥ २४ ॥**

अंशभेदेन क्वचित् निरुक्तां क्वचिदनिरुक्ताम् इव गायेत् । हि यस्मात् अयं समानः प्राणो निरुक्तोऽनिरुक्त इव क्वचित् स्पष्टः क्वचिदस्पष्ट इव शरीरे वर्तते ॥ २४ ॥

षष्ठ्यां धर्मान्तरमाह—

**या षष्ठी तामुदासमिव गायेत् । उदस्त इव ह्ययमुदानो यच्छृङ्गम् ॥ २५ ॥**

ताम् ऋचं षडक्षरपर्यन्तम् उदासं गायेत् । अयम् उदानाख्यः प्राणः उदस्तः ऊर्ध्वमाकृष्ट इव भवति । यद् यस्मात् शृङ्गम् उन्नतम् ॥ २५ ॥

---

3. Bh add अवाङ् after अयं
10. Bh J निरुक्तं...अनिरुक्तं for निरुक्तामनिरुक्तां.
16. Bh. om. या षष्ठी...धर्मान्तरमाह (p. 78. l. 1).
18. J. om. ताम् ऋचं...धर्मान्तरमाह (p. 78. l. 1).

बहिष्पवमानोत्तमायामृचि धर्मान्तरमाह—

**रथन्तरवर्णामुत्तमां गायेत् । इयं वै रथन्तरमस्यामेव प्रतितिष्ठति ॥ २६ ॥**

उत्तमाम् ऋचं रथन्तरवर्णां रथन्तरस्येव वर्णचतुष्टयोपेतां गायेदित्यर्थः। एतत् सर्वं व्याख्यातचरमिति । नात्र पुनरुक्तिः शङ्कनीया । पूर्वखण्डविवरणरूपत्वादस्य खण्डस्येति ॥ २७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ॥

---

4. MJK रथन्तरस्यैव for रथन्तरस्येव J. वर्तमान० for वर्ण०.
5. M. व्याख्यानान्तरम् for व्याख्यातचरम्.

# तृतीयः खण्डः

आख्यायिकया धुरः प्रशंसितुमुपक्रमते—

**देवाश्च वा असुराश्चैषु लोकेष्वस्पर्धन्त । ते देवाः प्रजापतिमुपाधावन् ॥ १ ॥**

पुरा देवाश्चासुराश्च एषु पृथिव्यादिषु लोकेषु विषयेषु अस्पर्धन्त । तत्र ते असुरेभ्यः स्पर्धमानाः इन्द्रादयो देवाः प्रजापतिमुपाधावन् उपागमन् ॥ १ ॥

ततः किमित्यत्राह—

**तेभ्य एतान् धुरः प्राणान् प्रायच्छत् । मनः प्रथममथ प्राणमथ चक्षुरथ श्रोत्रमथ वाचम् ॥ २ ॥**

प्रजापतिः तेभ्य एतान् वक्ष्यमाणान् धुरः धूरात्मकान् प्राणान् प्रायच्छत् । एतदेव विशिनष्टि—प्रथमं मनः । अथ अनन्तरं प्राणं मुख्यम् । ततश्चक्षुरथ श्रोत्रमथ वाचमिति ॥ २ ॥

ततोऽपि किमित्यत्राह—

**ताभ्यः पञ्चभ्यो धूर्भ्यः पुरुषं च पशूंश्च निरमिमीत ॥ ३ ॥**

तेभ्यो मनआदिरूपेभ्यो धूर्भ्यः पुरुषं च पशूंश्च निरमिमीत उत्पादितवान् ॥ ३ ॥

---

6. SIR. अग्रे, M. एते for ते.
11. RSI. add प्राणान after धुरः.
12. Bh MTK om. एतदेव; J. तद् for एतदेव.

अस्त्वेवम् । किं तत इत्यत्राह--

तेन पुरुषेणासुरानधूर्वन् । यदधूर्वंस्तद्धुरां धूस्त्वम् । धूर्वति पाप्पानं भ्रातृव्यं य एवं वेद ॥ ४ ॥

तेन धूर्भ्यो निर्मितेन पुरुषेण देवा असुरान् अधूर्वन् अवधिषुः । यद् यस्माद् अधूर्वंस्तत् ततो धुरां धूस्त्वम् अभूत् । य एवम् उक्तरीत्या धुरां स्वरूपं वेद सोऽपि भ्रातृव्यं शत्रुरूपं पाप्मानं धूर्वति हिनस्तीति ॥ ४ ॥

पुनरपि प्रकारान्तरेण धुरः प्रशंसति—

यो वै धुरां धूस्त्वं वेद धुरा धुरा भ्रातृव्याद्वसीयान् भवति । एतद्वै धुरां धूस्त्वं यन्नानावीर्या नानारूपा नानाछन्दस्या नानादेवत्याः समानं हिंकारमभिसंपद्यन्ते । एतद्वै धुरां धूस्त्वम् । धुरा धुरा भ्रातृव्याद्वसीयान् भवति । य एवं वेद ॥ ५ ॥

यः खलु धुरां यथोक्तं धूस्त्वं वेद स भ्रातृव्याद् शत्रोः सकाशात् आहृतया धुरा धुरा अनेकधनभारैः वसीयान् अतिशयेन वसुमान् भवति । किं च, एतद्वै एतदेव धुरां धूस्त्वं यन्नानारूपा नानावीर्या नानाछन्दस्याः गायत्र्यादिभेदेन, नानादेवत्याः प्राजापत्यादिदेवताभेदेन धुरः समानं हिंकारम् अभिसंपद्यन्त इति । यत् एतद्वै धुरां धूस्त्वम् इति उक्तस्यैवानुवादः । किं च, य एवं वेद सोऽपि धुरा धुरा भ्रातृव्याद् वसीयान् भवतीति ॥ ५ ॥

धूर्षु महाव्रतदृष्टिफलं दर्शयति—

यो वै धूर्षु महाव्रतं वेद सर्वा अस्मिन् पुण्या वाचो वदन्ति ॥ ६ ॥

---

5. M. उत्तरत्रापि for उक्तरीत्या.

11. RJI धूर्वति पाप्मानं भ्रातृव्यं for धुरा धुरा भ्रातृव्याद्वसीयान् भवति.

17. J. इति । एता एवानुवदन् धूर्वतीत्यादि भ्रातृव्याद् धुरा for इत्युक्तस्यैवा०....भ्रातृव्यात्.

यो वै य एवोद्गाता धूर्षु यथोक्तासु महाव्रतं वेद महाव्रतस्तोत्रदृष्टिं कुर्यात् अस्मिन् ज्ञातरि सर्वाः प्रजाः पुण्याः स्तुतिरूपा वाचो वदन्ति । प्रथितकीर्तिर्भवेदित्यर्थः ॥ ६ ॥

तत्रैव विशेषमाह—

शिरो गायत्र्युरस्त्रिष्टुप् मध्यं जगती पादावनुष्टुप् सर्वा अस्मिन् पुण्या वाचो वदन्ति य एवं वेद ॥ ७ ॥

तत्र गायत्री शिर इति, त्रिष्टुबुर इति, जगती मध्यमिति, अनुष्टुप् पादावित्येवं यो वेद अस्मिन् पुण्या वाचो वदन्तीति ॥ ७ ॥

एवं विदुषो गायत्र्यादिषु सप्रशंसं व्रतं दर्शयति—

यो वा एवं धुरो विद्वानथासां व्रतं चरत्यागमिष्यतोऽस्य पूर्वेद्युः पुण्या कीर्तिरागच्छति ॥ ८ ॥

अथशब्दो वाक्यालंकारार्थः । य एवं यथोक्तप्रकारेण धुरो विद्वान् जानन् आसां गायत्र्यादीनां धुरां व्रतं तद्विषयं नियमं चरति । यत्र यत्रागमिष्यतोऽस्य पूर्वेद्युः पुरस्तादेव पुण्या कीर्तिरागच्छतीति ॥ ८ ॥

किं तद्व्रतम्? तत्राह—

सुरभिरेव गन्धो गायत्र्या व्रतम् । दर्शनीयं त्रिष्टुभः । श्रवणीयं जगत्याः । यदेव वाचा पुण्यं वदति तदनुष्टुभः । तदु सर्वासां व्रतम् ॥ ९ ॥

सुरभिरेव गन्धो घ्रातव्य इति गायत्र्या व्रतं तद्विषयो नियमः । अनुकूलमेव द्रष्टव्यमिति त्रिष्टुभो व्रतम् । चक्षुःप्राणत्वात् त्रिष्टुभः । श्रवणीयमेव श्रोतव्यमिति जगत्याः । श्रोत्रप्राणत्वात् तस्याः । यदेव पुण्यं तद् एव वाचा वदतीति अनुष्टुभो व्रतम् । वाक्प्राणत्वात् अनुष्टुभः । तदु तदेव सर्वासां चतसृणां व्रतमिति ॥ ९ ॥

---

2. MT अस्य तस्मिन् for अस्मिन्.
17. MS add हि after जगत्याः.
19. MSR om. एव.

प्रकारान्तरेण तद्व्रतं प्रशंसति—

**तदु विद्वांसमाहुरति नोऽवादीरिति तदनादृत्यम् ॥ १० ॥**

तत् व्रतं विद्वांसं संजानानमुद्गातारं यद्येवमाहुरन्ये त्वं नोऽत्यवादीस्त्वमस्मानतिक्रम्यावादीरिति । ततस्तेनैषां वाक्यमनादृत्यम् । तेन विदुषां तदनादरणीयम् । एतदुक्तं भवति—अतिवाद्यसीत्युक्तेऽपि व्रतमहिम्ना तस्यातिवादनदोषो नास्तीति ॥ १० ॥

अथाज्यस्तोत्रेषु धुरो विधत्ते—

**यस्य वै धुरो विगीतास्तस्य संगीताः ॥ ११ ॥**

यस्यैव यजमानस्य संबन्धिनि यज्ञे धुरो विगीताः पृथग्गीतास्तस्यैव तत्र धुरः संगीताः संगत्यापि गातव्याः ॥ ११ ॥

तदेव विवृणोति—

**यस्य वा एता बहिष्पवमाने विगीयान्तराज्येषु संगायन्ति तस्य वै धुरो विगीतास्तस्य संगीताः ॥ १२ ॥**

यस्यैव यज्ञे बहिष्पवमाने स्तोत्रे सदसो बहिर्देशे एताः संनिहितपूर्ववाक्ये प्रकृता गायत्र्याद्याश्चतस्रो विगीय पृथक् सदित्यादिनिधनैर्गीत्वा पश्चादाज्येषु स्तोत्रेषु अन्तरा सदसो मध्ये संगायन्ति । ता धुर एकेनैव

---

4. RTSI संजानानाम्, J ज्ञानिनम् for संजानानम्; RTSIK om. विद्वांसं; RIS तु for त्वं; RTI. नोऽस्मांस्त्वमतिवादीर्, SM नोऽस्मान् त्वमतिक्रम्यावादीर् for नोऽत्य....०वादीर्.

5. J तत् for ततस्.

10. RS. यस्य वै for यस्यैव; J adds गायत्राद्याः after विगीताः; MT. एषः for एव; J om. एव.

15. J एतत् for एताः; RSI ०हिताः for ०हित०.

16. J प्रकृतौ for प्रकृताः; R च ताः for चतस्रो०; J पञ्च पञ्च पृथक् पृथक् for विगीय पृथक्; M. विगीयन्ते for विगीय; J ०त्यादीनि निधनानि नंजित्वा for त्यादिनिधनैर्गीत्वा.

17. J संगायन्तीति for संगायन्ति । ता०.

निधनेन प्रकृतेन समानं गायेदित्यर्थः । तथा च सति तस्य यज्ञे धुरो विगीताश्च भवन्ति । संगीताश्च भवन्ति । विगानं संगानं चोभयमपि कृतं भवति । उभयमप्यवश्यं कर्तव्यमेव । धुरां चक्षुरादिरूपत्वेन संस्तावनात् चक्षुरादीनां च बहिर्मुखे[न] पृथक् पृथगवस्थितानामन्तर्मुखेनास्यामेकस्यां संगत्य मूलतोऽवस्थानात् ॥ १२ ॥

आज्येषु विकल्पेन संगानं दर्शयितुं प्रथमं पक्षं तावदाह—

**यः कामयेतैकधा यजमानं यश ऋच्छेद्यथादिष्टं प्रजाः स्युरिति होतुराज्ये गायेत् । एकधा यजमानं यश ऋच्छति यथादिष्टं प्रजा भवन्ति ॥ १३ ॥**

य उद्गाता एकधा युगपदेव यशो यजमानम् ऋच्छेत् प्राप्नुयात् तथा यथादिष्टं यजमानस्य कामनामतिक्रम्य प्रजाः पुत्रपौत्रादिकाः स्युः भवेयुरिति कामयेत इच्छेत तर्हि होतुराज्य एव गायेत् । ता धुरः संगायेत् । तेन एकधा युगपदेव यजमानं यश ऋच्छति प्राप्नोति । यथादिष्टम् एव प्रजा भवन्ति ॥ १३ ॥

द्वितीयं पक्षं दर्शयति—

**यः कामयेत कल्पेरन् प्रजा यथादिष्टं यजमानः स्यादिति यथाज्यं गायेत् । कल्पन्ते प्रजा यथादिष्टं यजमानो भवति ॥ १४ ॥**

---

2. M. adds स्तुता गीता० after विगीता०; RSM om. संगीताश्च भवन्ति; T. समानं for संगानं; S. विकृतं for अपि कृतं; J adds. तु after कृतं.

3. TIK संस्तावात्, J संस्ते वाक्, S संस्थावान् for संस्तावनात्.

4. TIK मुखैः for मुखेन; J. om. one पृथक्; M. द्वयम्, JT. द्वयाम् for अस्याम्.

5. M. संगत्या J संगत्यम् for संगत्य; J. उभयतो० for मूलतो०.

6. RSI. आज्येन for आज्येषु; RKSI. संगमानं, TI समानं for संगानं.

10. J. om. य उद्गाता....गायेत् ।

यो यजमानस्य प्रजाः कल्पेरन् समर्थाः प्रजा भवेयुरिति । किं च, यजमानो यथादिष्टं स्यात् संकल्पसिद्धिश्च भवेदिति यदि कामयेत उद्गाता तर्हि यथाज्यम् आज्येषु चतुर्ष्वपि क्रमेण तत्तत्प्रथमासु चतस्रो धुरः सकृत्—सकृद् गायेत् । तेन अस्य यजमानस्य प्रजाः कल्पन्ते । यजमानो यथादिष्टं च भवति ॥ १४ ॥

तद्विद्वांसं प्रशंसति—

**यो वा एवं धुरो वेदानपजय्यमात्मने च यजमानाय च लोकं जयत्यति यजमानमात्मानं मृत्युं परं स्वर्गं लोकं हरति ॥ १५ ॥**

यश्चैवोद्गाता एवमुक्तप्रकारेण धुरो वेद सः अनपजय्यं केनापि जेतुमशक्यं लोकमात्मने यजमानाय च स्वार्थं यजमानार्थं च जयति । किं च, मृत्युम् अतिक्रम्य आत्मानं यजमानं च परम् उत्कृष्टं स्वर्गं हरति नयतीति ॥ १५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥

---

1. J adds कामयेत after यजमानस्य.

2. M. संकल्पश्च यजमानस्य शतायुः पुरुषः शतेन्द्रियः इति यजमानमृत्युं यद्युद्गाता कामयेत for संकल्पसिद्धिश्च...उद्गाता.

3. M. adds: स्तोत्रीयासु चतुर्ष्वपि after प्रथमासु.

4. RKSI. om. तेन; J प्रभुः प्रकल्पन्ते for प्रजाः कल्पन्ते

5. M. adds शतायुषं जीवीभवति after भवति ।

8. T लोकलोकं for लोकं; KTM. परां ShMs पराक् for परं.

11. M. adds अनतिसाधारणं स्वर्गादिलोकमित्यर्थः । after लोकम् ; M. आत्मने स्वात्मने यजमानाय लोकं जयतीत्यर्थः for आत्मने...जयति ।

12. M. adds उद्गाता स्वात्मानं यजमानं च मृत्युमतिक्रम्य after यजमानं च; M. परामुत्कृष्टां for परमुत्कृष्टं.

13. KT जनयति for नयति; M. om. नयति and adds अर्थः after इति.

## चतुर्थः खण्डः

अथोत्तरत्र होत्रादीनामग्न्यादिरूपेण व्यवहारः क्रियते । तदुपयोगित्वेन प्रकीर्णकान् कांश्चिद् धर्मानाह —

**प्राञ्चमग्निमुन्नयन्ति तस्मात् प्राङासीनो होतान्वाह प्राङासीनो यजति । प्राङासीनः शंसति ॥ १ ॥**

यस्मादग्नेरुन्नेतारः शालामुखीयादुत्तरवेद्यादौ प्राञ्चमग्निमुन्नयन्ति । तस्माद्धोता प्राङासीनः प्राङ्मुख उपविष्टो भूत्वाऽन्वाह अनुब्रवीतीति । प्रैषमनुवचनं कुर्यात् । तथा प्राङासीनो यजति याज्यां पठेत् । प्राङासीनः शंसति शस्त्रं पठति ॥ १ ॥

धर्मान्तरमाह—

**असावादित्यः प्राङपाङ् संचरति । तस्मादध्वर्युः प्राङपाङ् संचरति ॥ २ ॥**

यस्मादसौ परिदृश्यमान आदित्यः प्राङ् प्रागञ्चनः अपाङ् प्रत्यगञ्चनः इमान् लोकान् संचरति प्रत्यहं, तस्मादध्वर्युः स्वकर्मणि प्राङपाङ् संचरति ॥ २ ॥

धर्मान्तरं दर्शयति—

**अथैष चन्द्रमा दक्षिणेनैति तस्माद् ब्रह्माणं दक्षिणत आसयन्ति ॥ ३ ॥**

---

2. M. adds पूर्वखण्डे बहिष्पवमानमाज्यानां धुर उक्ता before उत्तरत्र; T adds उद्गातृ before होत्रा०.

6. Bh ०वेद्याप्राति, T ०वेदिप्रति, J वेद्यां प्रति for ०वेद्यादौ.

7. SRIK om. अन्वाह; Bh TJ om. भूत्वा; Bh ०ब्रूहि; TJ ०ब्रूते, R ब्रुवन्ति for ब्रवीति.

9. J. शसनं for शस्त्रं; T om. शस्त्रं.

13. R om. अपाङ् प्रत्यगञ्चनः; Bh TK प्रत्यगादिमान् for प्रत्यगञ्चनः;

14. Bh TK om. इमान् लोकान्.

17. SK ब्राह्मणं, T ब्राह्मणान् for ब्रह्माणं.

अथशब्दो वाक्योपक्रमे । यत एष चन्द्रमा दक्षिणेन पथा एति गच्छति तस्माद् ब्रह्माणं दक्षिणतो दक्षिणदिग्भागे आसयन्ति उपवेशयन्ति ॥ ३ ॥

अन्यं धर्मं दर्शयति—

**अथैतस्यामुदीच्यां दिशि भूयिष्ठं [पर्जन्यो] विद्योतते तस्मादेतां दिशमुद्गाता प्रत्युद्गायति ॥ ४ ॥**

यत एतस्यां प्रसिद्धायाम् उदीच्यां दिशि भूयिष्ठम् अधिकं पर्जन्यो विद्योतते विशेषेण स्वमहिमानं प्रकटयति तस्मादुद्गाता एताम् उदीचीं दिशं प्रति उदङ्मुखः सन् उद्गायति ॥ ४ ॥

धर्मान्तरं विधत्ते—

**अथैष आकाशो मध्यतो भूतानां सन्नस्तस्मान्मध्ये सदस्यमासयन्ति ॥ ५ ॥**

भूतानां पृथिव्यादीनां मध्ये एष व्याप्त आकाशः सन्नोऽवहितो भवति । तस्मात् सदसो मध्ये सदस्यं सप्तदशमृत्विजम् आसयन्ति ॥ ५ ॥

धर्मान्तरं विधत्ते—

**उच्चावचा वा आप उतेव गाधा भवन्त्युतेव गम्भीरास्तस्माद्धोत्राशंसिन उतेव पञ्चर्चेन कुर्वन्त्युतेव भूयसा ॥ ६ ॥**

उत आप उच्चावचा न्यूनाधिकान्यूनाधिकभावेन वर्तन्ते उत अपि च ता आपो गाधाः क्वचिदपगतप्रतिष्ठा इव भवन्ति । उत अपि च ता आपो गम्भीराः अगाधा इव भवन्ति । तस्मा द्धोत्राशंसिनोऽपि

---

2. TSK ब्राह्मणं for ब्रह्माणं; RTSIK दिग्भागे for दक्षिणदिग्भागे०.
4. KT Bh अन्य०, J अन्यद् for अन्यं.
14. RKS आसादयन्ति for आसयन्ति.
19. R Bh I om. उच्चावचा ; J om. न्यूनाधिका ०.
21. J adds उतेव गम्भीरा before उत.

पञ्चर्चेन शस्त्रेण स्तुतिं कुर्वन्ति । उत अपि च भूयसा बह्वीभिः ऋग्भिः साध्येन शस्त्रेण स्तुतिं कुर्वन्ति ॥ ६ ॥

धर्मान्तरं विधत्ते—

आदित्यस्यैव गतं रश्मयोऽनुयन्ति तस्मादध्वर्योरेव गतं चमसाध्वर्यवोऽनुयन्ति ॥ ७ ॥

अत आदित्यस्यैव गतं गमनं रश्मयः तदीयाः अनुयन्ति अनुगच्छन्ति । तस्माद् अध्वर्योरेव गतं चमसाध्वर्यवोऽनुयन्तीति ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ ॥

1. T नमस्कृतिं for स्तुतिं.

4. TSIK. om. एव.

6 J om. अतः,

# पञ्चमः खण्डः

अथ चमसभक्षणायोपहवादयः कथ्यन्ते । तत्र प्रथमं प्रातःसवनसंबन्धिन उपहवान् दर्शयति—

**स प्रातःसवने सवनमुखीयेष्वाहृतेषूपहवमिच्छते ॥१॥**

स यजमानः चमसं भक्षयितुं प्रातःसवने सवनमुखीयेषु चमसेषु चमसाध्वर्युभिराहृतेषूपहवमनुज्ञानम् इच्छते इच्छेत् ॥ १ ॥

कथमित्याशङ्क्य तत्र प्रथमं होतृविषयोपहवप्रकारं दर्शयति—

**अग्निर्मे होता स मोपह्वयतां होतरुप माह्वयस्वेत्युच्चैः ॥ २ ॥**

मे मम अग्निरेव देवो होता । तदात्मको होता । स माम् उपह्वयताम् अनुजानातु इति उपांशूच्चार्य हे होतः मामुपह्वयस्व अनुजानीहि इति मन्त्रभागम् उच्चैः उच्चारयेत् ॥ २ ॥

अध्वर्युविषयोपहवप्रकारं दर्शयति—

**आदित्यो मेऽध्वर्युः स मोपह्वयतामध्वर्य उप माह्वयस्वेत्युच्चैः ॥ ३ ॥**

मे मम आदित्य एव देवोऽध्वर्युः । स मामुपह्वयतामित्युपांशूच्चार्य अध्वर्य उप माह्वयस्वेति मन्त्रभागमुच्चैरुच्चारयेदिति ॥ ३ ॥

---

5. R Bh KTSI. om. स यजमानः; J om. चमसं भक्षयितुं; Bh. T चमसस्य, R समं for चमसं; Bh. भक्षयित्वा for भक्षयितुं; J. सवनसंबन्धिसवन० for सवने सवन० ; RSIK om, चमसेषु.

6. SI. om. अनुज्ञानम्; RSI add यज्ञमात्मने after ०ज्ञानम्.

10. Bh समग्न्या०, J मनुष्या० for तदा०.

16. RSIK om. मम; RSIK आदित्यदेवो०, Bh TJ आदित्य एवा० for आदित्य एव देवो०; TK ०ह्वयस्व माम्, Bh. ०ह्वयस्व साम्नाम् for ह्वयताम्.

ब्रह्मविषयं तत्प्रकारं दर्शयति—

**चन्द्रमा मे ब्रह्मा स मोपह्वयतां ब्रह्मन्नुप माह्वयस्वेत्युच्चैः ॥ ४ ॥**

मे मम चन्द्रमा एव ब्रह्मा । शिष्टं पूर्ववत् ॥ ४ ॥

उद्गातृविषयं तत्प्रकारं दर्शयति—

**पर्जन्यो म उद्गाता स मोपह्वयतामुद्गातरुप माह्वयस्वेत्युच्चैः ॥ ५ ॥**

मे पर्जन्य एवोद्गाता । शिष्टं पूर्ववत् ॥ ५ ॥

सदस्यविषयं तद्दर्शयति—

**आकाशो मे सदस्यः स मोपह्वयतां सदस्योप माह्वयस्वेत्युच्चैः ॥ ६ ॥**

आकाश एव सदस्यः । शिष्टं स्पष्टम् ॥ ६ ॥

होत्राशंसिविषयमपि तद्दर्शयति—

**आपो मे होत्राशंसिनस्ते मोपह्वयन्तां होत्राशंसिन उप माह्वयध्वमित्युच्चैः ॥ ७ ॥**

एतदतिरोहितार्थम् ॥ ७ ॥

चमसाध्वर्युविषयोपहवप्रकारं दर्शयति—

**रश्मयो मे चमसाध्वर्यवस्ते मोपह्वयन्तां चमसाध्वर्यव उप माह्वयध्वमित्युच्चैः ॥ ८ ॥**

रश्मय आदित्यकिरणा एव चमसाध्वर्यवः । अन्यत् स्पष्टम् । यद्यपि होत्राशंसिनां चमसाध्वर्यूणां च चमसो नास्ति तथापि तदनुज्ञा लब्धव्येति नियमार्थं

---

4. Bh TIK. om. मम.

8. Bh JT om. मे पर्जन्य....तद्दर्शयति.

10. Bh T. om. आकाशो० ०त्युच्चैः.

12. Bh TJ. om. आकाश०....तद्दर्शयति.

21. Bh ०होत्रप्रशं०, T होत्राप्रशं० for होत्राशं०; Bh JS ०शंसिनः for ०शंसिनां ; J ०ध्वर्यवः for ०ध्वर्यूणां ; Bh. चमसभुजो०, J चमसभाजो न सन्ति for चमसो नास्ति

तत्प्रकारदर्शनमिति । अग्निर्मे होतेत्यादयो ये मन्त्रास्ते याजमानाः । तथा चानुकल्पे दर्शितम्। प्रथमः सवनमुखीयोऽग्निर्मे होतेति याजमानमिति ॥८॥

यथोक्तं होत्राद्युपहवप्रकारं प्रशंसति—

**ता वा एता देवता ऋत्विजामेव वाग्भिरुपह्वयन्ते ॥ ९ ॥**

ता एता अग्न्याद्या देवता एव ऋत्विजां संबन्धिनीभिरुपहवरूपाभिर्वाग्भिः उपह्वयन्ते अनुज्ञाप्यन्ते ॥ ९ ॥

ततः किमित्यत्राह—

**स उपहूतो भक्षयति ॥ १० ॥**

पश्चात् स उपहूतः होत्रादिभिरनुज्ञातः सन् चमसं भक्षयति ॥ १० ॥

यथोक्तमनुज्ञानं प्रशंसति—

**प्राणो यजमानोऽथो यत्रैतासां देवतानां लोकस्तदुपहूतो भवति ॥ ११ ॥**

यजमानः प्राणः मुख्यत्वसाम्यात् । अथो अपि च यत्र एतासामग्न्यादीनां देवतानां लोकः तत् तत्र होत्रादिभिः अग्न्यादिरूपैः उपहूतो यजमानो अनुज्ञातो भवतीति ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

1. RS ०कारं दर्शितम for ०कारदर्शनम्; TSIK. om. ये and ते.

2. S हि, I तद्धि, K तस्माद्वा for च; RS om. प्रथमः... याजमानमिति.

6. RSI अग्न्यादि० for अग्न्याद्या०; SI संबन्ध्युप for संबन्धिनीभिरुप०.

## षष्ठः खण्डः

अथ माध्यंदिनसवनसंबन्धिन उपह्वान् दर्शयति—

माध्यंदिने सवने सवनमुखीयेष्वाहुतेषूपहव-मिच्छते ॥ १ ॥

पूर्ववद्व्याख्येयम् ॥ १ ॥

कथमित्याशङ्क्य, तत्र प्रथमं होत्रादिविषयोपहवप्रकारं दर्शयति—

वाङ्मे होता स मोपह्वयतां होतरुप माह्वयस्वेत्युच्चैः । चक्षुर्मेऽध्वर्युः स मोपह्वयतामध्वर्य उप माह्वयस्वेत्युच्चैः । मनो मे ब्रह्मा स मोपह्वयतां ब्रह्मन्नुप माह्वयस्वेत्युच्चैः । श्रोत्रं म उद्गाता स मोपह्वयताम् उद्गातरुप माह्वयस्वेत्युच्चैः ॥ २ ॥

मे मम वागेव होता । मन्त्रोच्चारणरूपाया वाचः तत्कार्यत्वात् । चक्षुरेव । अध्वर्युः तत्पूर्वकत्वात् सर्वस्य हविस्त्यागकर्मणः । मन एव ब्रह्मा यथा प्राणानां मध्ये मनोऽर्धभाक् तथा ब्रह्मा ऋत्विजामर्धभाक् । तथा च ऐतरेयब्राह्मणम्—तस्माद् ब्रह्मार्धभाग्घवा एष इतरेषाम् ऋत्विजाम् (७. ३४) इति । श्रोत्रं मे मम उद्गाता । गीतिप्रतीतिसाम्यात् । अन्यत् पूर्ववद्व्याख्येयम् ॥ २ ॥

अथ सदस्यादिविषयमुपहवप्रकारं दर्शयति—

योऽयमन्तश्चक्षुष्याकाशः स मे सदस्यः । स मोपह्वयतां सदस्योप माह्वयस्वेत्युच्चैर्या इमा अन्तश्चक्षुष्यापस्ते मे होत्राशंसिनस्ते मोपह्वयन्तां होत्राशंसिन उप माह्वयध्वमि-

---

2. Bh I. om. ०सवन०.

12. R Bh J सर्वं० for सर्वस्य; Bh J ०व्यख्याताङ्ग० for हविस्त्याग०.

त्युच्चैः अङ्गानि मे चमसाध्वर्यवस्ते मोपह्वयन्तां चमसाध्वर्यव उप माह्वयध्वमित्युच्चैः ॥ ३ ॥

अन्तश्चक्षुषि चक्षुषोर्मध्ये योऽयमाकाशः स एव मे सदस्यः । अन्तश्चक्षुषि या इमाः परिदृश्यमाना आपः ता एव होत्राशंसिनः । मम अङ्गान्येव चमसाध्वर्यवः उपकारकत्वसाम्यात् । अन्यत् पूर्ववद्व्याख्येयम् । वाङ् मे होतेत्यादयोऽपि मन्त्राः याजमानाः । तथा चानुकल्पः—वाङ् मे होतेति माध्यंदिनस्य सवनस्य याजमानमिति ॥ ३ ॥

यथोक्तम् उपह्वप्रकारं दर्शयति—

ता वा एता देवता ऋत्विजामेव वाग्भिरुपह्वयन्ते ॥ ४ ॥

ता एता वागादिरूपा देवता एव ऋत्विजामुपह्वरूपाभिर्वाग्भिः उपह्वयन्ते ॥ ४ ॥

ततः किं कुर्यादित्याह—

स उपहूतो भक्षयति ॥ ५ ॥

पश्चात् स उपहूतो होत्रादिभिरनुज्ञातः सन्नेव भक्षयति ॥ ५ ॥

यथोक्तमनुज्ञानं प्रशंसति—

अपानो यजमानोऽथो यत्रैतासां देवतानां लोकस्तदुपहूतो भवति ॥ ६ ॥

यजमानः अपानाख्यप्राणरूपः । अन्यत् समानमिति ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये
द्वितीयाध्याये षष्ठः खण्डः ॥ ६ ॥

---

4. BhTJ ते for ता.
5. Bh J ०कारकरणत्व० for ०कारकत्व०; Bh. सामान्यात for साम्यात.
6. J. om. आदयोऽपि...सवनस्य.
7. Bh MTK. om. माध्यंदिनस्य सवनस्य.

## सप्तमः खण्डः

अथ तृतीयसवनसंबन्धिनम् उपहवं दर्शयति—

स तृतीयसवने सवनमुखीयेष्वाहृतेषूपहव-मिच्छते ॥ १ ॥

पूर्ववद्व्याख्येयम् ॥ १ ॥

कथमित्याशङ्क्य, तत्र प्रथमं होत्रादिविषयोपहवप्रकारं दर्शयति—

प्राणो मे होता स मोपह्वयतां होतरुप माह्वयस्वेत्युच्चैः । अपानो मेऽध्वर्युः स मोपह्वयताम् अध्वर्य उप माह्वयस्वेत्युच्चैः । व्यानो मे ब्रह्मा स मोपह्वयतां ब्रह्मन्नुप माह्वयस्वेत्युच्चैः । समानो म उद्गाता स मोपह्वयताम् उद्गातरुप माह्वयस्वेत्युच्चैः ॥ २ ॥

प्राणादय एव होत्रादयः । एतावान् विशेषः । समानमन्यत् ॥ २ ॥

सदस्यादिविषयं तत्प्रकारं दर्शयति—

योऽयमन्तःपुरुष आकाशः स मे सदस्यः स मोपह्वयतां सदस्योप माह्वयस्वेत्युच्चैः । या इमा अन्तःपुरुष आपस्ते मे होत्राशंसिनस्ते मोपह्वयन्तां होत्राशंसिन उप माह्वयध्वमित्युच्चैः । लोमानि मे चमसाध्वर्यवस्ते मोपह्वयन्तां चमसाध्वर्यव उप माह्वयध्वमित्युच्चैः ॥ ३ ॥

अन्तःपुरुषे देहस्य मध्ये योऽयमाकाशः आसमन्तात् काशत इत्याकाशः आत्मा स एव मे सदस्यः । अन्तःपुरुषे इमाः प्रसिद्धा या आपस्ते

---

12. Bh J add इति after होत्रादयः; M adds अपानो मेऽध्वर्युरित्यादिकम after अन्यत्.

मे होत्राशंसिनः । देहवर्तीनि लोमानि एव मम चमसाध्वर्यवः उपाङ्गत्वसाम्यात् । समानमन्यत् । एते प्राणो मे होतेत्यादयोऽपि मन्त्रा याजमानाः । तथा चानुकल्पः—

प्राणो मे होतेति याजमानमिति ॥ ३ ॥

यथोक्तमुपहवप्रकारं प्रशंसति—

**ता वा एता देवता ऋत्विजामेव वाग्भिरुपह्वयन्ते ॥ ४ ॥**

पूर्ववत् ॥ ४ ॥

ततः किं कुर्यादित्याह—

**स उपहूतो भक्षयति ॥ ५ ॥**

स उपहूतः सन्नेव चमसं भक्षयतीत्यर्थः ॥ ५ ॥

यथोक्तमनुज्ञानं प्रशंसति—

**स उदानो यजमानोऽथो यत्रैतासां देवतानां लोकस्तदुपहूतो भवति ॥ ६ ॥**

यजमान उदानाख्यप्राणरूपः । शिष्टं पूर्ववद्व्याख्येयम् ॥ ६ ॥

एवमुपहवान् दर्शयित्वा इदानीं होतुः सर्वचमसेष्वपि भक्षणं विधत्ते—

**सर्वेषां वै वषट्कर्ता चमसं भक्षयेत् ॥ ७ ॥**

वषट्कर्ता होता सर्वेषाम् एवर्त्विजां चमसं भक्षयेत् । न स्वस्यैव चमसमित्यर्थः ॥ ७ ॥

किं वषट्कर्ता उद्गातृचमसमपि भक्षयेदुत नेत्यत्राह—

**देवानां वा एतद्यज्ञस्य मुखं यदुद्गातृचमसम् । तस्मादुद्गातृचमसं नान्यो भक्षयेत् ॥ ८ ॥**

---

5. Bh MT om. उपहवप्रकारं ; MT स्तौति for प्रशंसति.
9. RSIK om. ततः; J तत्र for ततः; RKSI add अत्र after इति.
10. RTSK. om. सः
15. Bh J शेषं for शिष्टं.
16. J. भक्षप्रसङ्गेनान्यद्विषयं किंचिदाह for एवम्- ...विधत्ते.
18. RSI स्वमेव for स्वस्यैव.
20. Bh J. om. उत.

देवानामेव यज्ञस्य एतत् मुखं यदुद्गातृचमसं तत्र स्थितं सोमात्मकं हविः । यत एवं तस्मात् उद्गातृचमसम् अन्यो वषट्कर्ता न भक्षयेत् ॥ ८ ॥

यथोक्तार्थस्य वेदितारं प्रशंसति—

एवं विदुषो ह वै यज्ञो न व्यथते । एवं विदुषो ह वै यजमानस्य स्वर्ग्यं पुत्र्यं पशव्यमिष्टं भवति । एवं विद्वान् ह वै यजमानो द्विषन्तं भ्रातृव्यमभिभवति । अथ वा अतो यज्ञे हीनं कुर्यात् ॥ ९ ॥

एवम् उक्तप्रकारेण विदुषो यजमानस्य यज्ञो न व्यथते व्यथारहितः अदुष्ट एव भवतीत्यर्थः । किंचैवं विदुषो यजमानस्य इष्टम् अभिलषितं स्वर्ग्यं यागफलभूतस्वर्गहितं भवति । इह लोके पुत्र्यं पुत्रहितं, पशव्यं पशुहितं च तत्साधनमित्यर्थः । तथा एवं विद्वान् यजमानो द्विषन्तं भ्रातृव्यं शत्रुमभिभवत्येव । अथ वै अपि च यः एवं विद्वान् अतो यथोक्तादङ्गजातात् यज्ञे हीनं कुर्यात् । सोऽपि तं यज्ञं संपूर्णमेव कृतवान् भवतीति विशेषः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये सप्तमः खण्डः ॥ ७ ॥

समाप्तश्च द्वितीयाध्यायः ॥ २ ॥

---

2. Bh J. om. हविः
9. Bh T. अदृष्टः for अदुष्टः.
13. R Bh Sl. शेषः, J इत्यर्थः for विशेषः.

# तृतीयाध्यायः

अथार्त्विज्येषु ऋत्विजां यजमानस्य च विज्ञेयं प्रतिपाद्यते । तत्र प्रथमं होतुर्विज्ञेयं दर्शयति—

**यद्धोता जहाति वाग्घ तद्यजमानं जहाति । स यत्तत्करोति स्वां वाचं यजमाने दधाति । स विष्वङ् वाचामुष्मिंल्लोके संभवति ॥ १ ॥**

आर्त्विज्ये होता यत् कर्माविज्ञाय जहाति तत् तेन कर्मत्यागेन वाग्घ वागेव यजमानं जहाति । वाङ्मे होतेति प्रागभिधानात् । तत् तस्मात् सः होता यत् कर्म विज्ञाय मयैतावदनुष्ठेयमिति करोति तदा स्वां यजमानसंबन्धिवाचं यजमाने दधाति निदधाति । किं च, होता स्वयमपि इह लोके वाचा विष्वङ् सर्वव्यापी सर्वव्यवहारसमर्थः सन् अमुष्मिन् परलोके संभवति स्वाभीष्टं फलं प्राप्तुं समर्थो भवति । अतो होत्रा स्वकर्म सम्यग् विज्ञेयमित्यर्थः ॥ १ ॥

अथाध्वर्युविज्ञेयं दर्शयति—

**यदध्वर्युर्जहाति चक्षुर्ह तद्यजमानं जहाति । स यत्तत् करोति स्वं चक्षुर्यजमाने दधाति । स विष्वङ् चक्षुषामुष्मिंल्लोके संभवति ॥ २ ॥**

---

2. TK आर्त्विजेषु for आर्त्विज्येषु; TKM. ऋत्विजो० for ऋत्विजां.
3. T Bh J om. विज्ञेयं.
7. M. ०विज्ञेयं, K. ०विज्ञो यज्ञ्, T ०विज्ञेया for ०विज्ञाय; Bh. TS. जुहोति for जहाति; M त्यजति यत्नेन कर्मणा गतेन for तत् ...०त्यागेन.
9. RI सत for यत्; J. om. मयैता वदनुष्ठे...यमिति.
10. M. किंस्वित् for किंच.
11. R. सर्वस्यापि for सर्वव्यापी.
14. Bh J. om. दर्शयति.

अध्वर्युः यत् स्वीयं कर्म अज्ञानात् जहाति तत् तेन चक्षुरेव यजमानं जहाति । चक्षुर्मेऽध्वर्युर् (ष. ब्रा. २.६.२) इत्युक्तत्वात् । किं च स्वयमपि चक्षुषा इह लोके विष्वङ् सर्वं जानन् । समानमन्यत् । अतोऽध्वर्युणा स्वकर्म सम्यग् विज्ञेयमित्यभिप्रायः ॥ २ ॥

ब्रह्मविज्ञेयं दर्शयति—

**यद् ब्रह्मा जहाति मनो ह तद्यजमानं जहाति । स यत्तत् करोति स्वं मनो यजमाने दधाति । स विष्वङ् मनसामुष्मिंल्लोके संभवति ॥ ३ ॥**

ब्रह्मा यत् स्वकीयं कर्म जहाति तत् तेन मन एव यजमानं त्यजति । मनो म ब्रह्मा (ष. ब्रा. २.६.२) इत्युक्तत्वात् । मनसा विष्वङ् स्वमनसि स्थितं सर्वमभीष्टं प्राप्नुवन् । शिष्टं पूर्ववत् ॥ ३ ॥

उद्गातृविज्ञेयं दर्शयति —

**यदुद्गाता जहाति श्रोत्रं ह तद्यजमानं जहाति । स यत्तत् करोति स्वं श्रोत्रं यजमाने दधाति । स विष्वङ् श्रोत्रेणामुष्मिंल्लोके संभवति ॥ ४ ॥**

यदि स्वीयं कर्म उद्गाता जहाति तर्हि श्रोत्रमेव यजमानं जहाति । श्रोत्रं म उद्गाता (ष. ब्रा. २.६.२) इत्युदितत्वात् । अतः स्वं कर्म जानन् करोति चेत् यजमाने स्वं श्रोत्रं निदधाति । स्वयमपि श्रोत्रेण विष्वङ् सर्वं श्रोतव्यं सर्वतो जानन् परलोके स्वाभीष्टं फलं लभत इति । अतः स्वीयं कर्म सम्यग् जानीयादित्यर्थः ॥ ४ ॥

---

1. Bh J om. अध्वर्युः

3. RSI सर्वान् जनान्, T सर्वं जानत् for सर्वं जानन्.

9. RSI स्वयम् for स्वकीयं; RSI add अज्ञानात् before कर्म; Bh MTJ om. तत् तेन; RSI om. एव; R Bh I जहाति for त्यजति.

11. M. प्राप्नुयात् for प्राप्नुवन्.

12. T विज्ञेयान् for° विज्ञेयं.

17. RSI. उक्तत्वात् for उदितत्वात्.

सदस्यविज्ञेयं दर्शयति—

यत्सदस्यो जहाति आत्मा ह तद्यजमानं जहाति । स यत्तत् करोति स्वात्मानं यजमाने दधाति । स विष्वङ्ङात्मनामुष्मिंल्लोके संभवति ॥ ५ ॥

सदस्यः स्वीयं कर्माज्ञानाज्जहाति चेदात्मैव यजमानं जहाति । योऽयमन्तःपुरुष आकाशः स मे सदस्यः (ष. ब्रा. २.७.३) इति आत्मत्वेनोक्तत्वात् । स आत्मना विष्वङ् अन्यनिरपेक्षेणैव सर्वंव्यापी । शिष्टं समानम् ।.५॥

होत्राशंसिनां विज्ञेयं दर्शयति—

यद्धोत्राशंसिनो जहत्यङ्गानि ह तद्यजमानं जहति । ते यत्तत् कुर्वन्ति स्वान्यङ्गानि यजमाने दधति । ते विष्वञ्चोऽङ्गैरमुष्मिंल्लोके संभवन्ति ॥ ६ ॥

होत्राशंसिनो यत् कर्म जहति अङ्गानि एव यजमानं त्यजन्ति । अङ्गानि मे चमसाध्वर्यवः (ष. ब्रा. २.६.२) इत्युक्तत्वात् । यदि स्वीयं कर्म विज्ञाय कुर्वन्ति यजमाने अङ्गान्येव दधति । तेऽपि स्वीयैरविकलैरङ्गैः विष्वञ्चः सर्वगा भवन्ति । समानमन्यत ॥ ६ ॥

चमसाध्वर्युभिर्विज्ञेयं दर्शयति—

यच्चमसाध्वर्यवो जहति लोमानि ह तद्यजमानं जहति । ते यत्तत् कुर्वन्ति स्वानि लोमानि यजमाने दधति । ते विष्वञ्चो लोमभिरमुष्मिंल्लोके संभवन्ति ॥ ७ ॥

---

5. Bh MTJ. om. चेद् .

6. Bh T सदस्यात्मत्वेनो, J सदस्य इति सदस्यात्मो०, R. सदस्य इत्यात्मनो० for सदस्य इत्यात्मत्वेनो०.

7. Bh J. सामान्यम् for समानम् .

8. M. ०शंसिनो for ०शंसिनां.

9. यद्धोत्राशंसिनो See CN.

12. J trans. यत् कर्म before होत्राशंसिनो०; TJ add त्यजन्ति after जहति.

13. Bh MTI. om. अङ्गानि.. इत्युक्तत्वात् .

14. RSI add स्वानि after अङ्गान्येव; Bh T विदधति for दधति; J. ते विष्वञ्चोऽप्यङ्गैरन्यैः for तेऽपि...विष्वञ्चः.

16. (अ)ध्वर्युवि० for (अ)ध्वर्युभिर्वि०.

यदि चमसाध्वर्यवः स्वीयं कर्म अज्ञानात् त्यजन्ति लोमान्येव यजमानं त्यजन्ति । लोमानि मे चमसाध्वर्यवः (ष. ब्रा. ३. ७. ३) इत्युक्तत्वात् । समानमन्यत् ॥ ७ ॥

यथोक्तमुपसंहरति—

**तस्मादेवंविद्यज्ञे हीनं न कुर्यात् ॥ ८ ॥**

यस्मादेवं तस्मादेवंवित् यथोक्तप्रकारेण स्वकर्म जानन् ऋत्विक् यज्ञे हीनम् अङ्गवैकल्यं न कुर्यात् ॥ ८ ॥

एवमृत्विग्विज्ञेयं दर्शयित्वा इदानीं यजमानविज्ञेयं दर्शयति—

**अथ वा अत ऋत्विजामेव विज्ञानम् ॥ ९ ॥**

अथ अनन्तरम् अत एव अङ्गवैकल्यपरिहारायैव ऋत्विजां कर्माण्येव यजमानस्य विज्ञानम् उच्यते इति शेषः ॥ ९ ॥

किं तद्विज्ञेयमित्याशङ्क्य तदर्थमुपोद्घातमाह—

**पशवो ह्याध्वर्युमनु कीर्तिर्होतारं योगक्षेमो ब्रह्माणमात्मा च प्रजा चोद्गातारम् ॥ १० ॥**

अथ यजमानस्य पशवोऽध्वर्युमेवानु । वर्तन्त इति शेषः । तदीयकीर्तिर्होतारमनुवर्तते । अस्य योगक्षेमः—अलब्धलाभो योगः । लब्धपरिपालनं क्षेमः । तदुभयमपि ब्रह्माणम् अनुगच्छति । आत्मा स्वयं यजमानः प्रजा च पुत्रादिकाश्च उद्गातारमनुवर्तन्त इति ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥

---

2. R. जहति for त्यजन्ति.
4. RSI. स्वकर्म उक्तप्रकारेण for यथो०...स्वकर्म (L. 6)
6. M. प्रतीयन् for ऋत्विक्.
7. T भिन्नम्, M हानिम् for हीनम्.
8. Bh J. om. एवम्...दर्शयति; K. ऋत्विग्भिर् for ऋत्विग्; after दर्शयति RIKS. add यद्वा यजमानेन ऋत्विक्षु विज्ञेयं दर्शयन् सामान्यतो दर्शयति S. after सामान्यतो add विज्ञेयं.
10. Bh J. om. अत एव; RSIK ०हाराद् for ०हाराय.
11. K Bh M. विशेषः for शेषः.
12. S. तदुक्त० for तदर्थ०.
13. Bh MTSKSh. कीर्ति for कीर्तिर्.
16. Bh M कीर्तिरूप, J कीर्तिरपि for कीर्तिर्.

# द्वितीयः खण्डः

इदानीमौपोद्घातिकमाह—

स यदि पशुतो व्याधीयेताध्वर्युर्म इदमकरिति विद्यात् । अथ यद्येनं पापिका कीर्तिरनूदियाद्धोता म इदमकरिति विद्यात् । अथ यद्यस्य योगक्षेमो व्यथेत ब्रह्मा म इदमकरिति विद्यात् । अथ यद्यात्मना वा प्रजया वा व्याधीयेतोद्गाता म इदमकरिति विद्यात् ॥ १ ॥

तत्र स यजमानः यदि पशुतो पशुभ्यो व्याधीयेत भ्रश्येत तर्हि मे मम इदम् अनिष्टम् अध्वर्युः स्वकर्मपरित्यागेनाकार्षीदिति विद्याज्जानीयात् ॥

अथ पुनर्यद्येनं यजमानं पापिका पापसंबन्धिनी कीर्तिरनूदियात् अनुगेच्छत् तर्हि ममेदं कष्टं होता स्वकर्मत्यागेनाकार्षीदिति विद्यात् ॥

अथ पुनः यद्यस्य योगक्षेमो व्यथेत नश्येत् तर्हि ब्रह्मेदं कष्टमकार्षीदिति विद्यात् ॥

अथ यद्यसौ आत्मना वा आध्यात्मिकक्लेशेन प्रजया पुत्रादिकया वा व्याधीयते विपन्नो भवेत् तर्हि उद्गाता ममेदमनिष्टमकार्षीदिति विद्यादिति ॥ १ ॥

---

2. KM add एव after इदानीम्.

8. RSIK om. तत्र ; RSI add म्रियेत after व्याधीयेत; Bh J भ्रश्येत् for भ्रश्येत and adds तत thereafter.

9. M. अध्वर्युकर्तृकं for अध्वर्युः and adds स तु मे thereafter.

10. RSI यद्येनं पापिका कीर्तिः अपयशोऽयजमानो नूदियात् भवेत् for यद्येनं...अनुगच्छेत्.

11. Bh MTJ om. तर्हि; RSI. अनिष्टं for कष्टं.

12. RSI अनिष्टं for कष्टं.

14. J. यद्यस्य for यद्यसौ; R. व्याध्या, Bh T साध्या for वा.

15. RSI विहीनो० for विपन्नो०.

अथ नैमित्तिकान् होमान् दर्शयति—

प्राणदैवत्यो वै ब्रह्मा । वाग्देवत्या इतर ऋत्विजः । स यदि मन्येत ब्रह्मा म इदमकरिति हरितं हिरण्यं दर्भनाड्या प्रबध्य स्रुच्यवधाय चतुर्गृहीतमाज्यं गृहीत्वा जुहुयान्नमः प्राणाय वाचस्पतये स्वाहेति । यद्यु वा इतरे नमो वाचे प्राणपत्न्यै स्वाहेति । यदीतरो यदि वेतरे सर्वेष्वेवानुपर्यायं जुहुयान्नमः प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपत्न्यै स्वाहेति ॥ २ ॥

ब्रह्मा प्राणदेवत्यो वै प्राणदेवत्यः खलु । व्यानो मे ब्रह्मेति व्यानाख्यप्राणात्मकत्वेनोक्तत्वात् । ब्रह्मणः इतरे होत्रादयः ऋत्विजो वाग्देवत्याः । वाङ्मे होतेत्यादिश्रुतेः । तत्र यदि स यजमानो ब्रह्मा मे मम यज्ञे इदम् अहितम् अकः अकार्षीद् इति मन्येत निश्चिनुयात् तर्हि हरितं पार्थिवावयवोपष्टम्भाद्धरितवर्णं हिरण्यं दर्भनाड्या प्रबध्य प्रग्रथ्य स्रुच्यवधाय निधाय आज्यं चतुर्गृहीतं गृहीत्वा नमः प्राणाय वाचस्पतये स्वाहेत्यनेन मन्त्रेण चोदितााग्नौ जुहुयात् । अथ पुनर्यदि वै यद्येव इतरे होत्रादयो ऋत्विजो मम यज्ञे हीनमकार्षुरिति यजमानो मन्येत तर्हि नमो वाचे प्राणपत्न्यै स्वाहेत्यनेन मन्त्रेण पूर्ववच्चतुर्गृहीतमाज्यं जुहुयात् । यदि वा इतरो ब्रह्मा, यदि वा इतरे होत्रादयः सर्वेऽपि न्यूनमकार्षुरिति यजमानो मन्येत तर्हि

---

4. Bh. Concludes with प्रबध्य.

6. TS चेतरे for वेतरे.

10. J ०त्मकत्वात् for ०त्मकत्वेनोक्तत्वात्.

11. KT अत्र, M कुत्र for तत्र.

12. T हीनम् M मम for अहितम्; RSI om. अकः.

13. J. om. हिरण्यं.

15. RSI. चोदितं होमं, J चोदितेन, T चोदितोऽसौ, K. चोदितः सन् for चोदितााग्नौ.

17. J adds गृहीत्वा after आज्यं.

18. J. adds यदि before यजमानो.

सर्वेष्वेव गार्हपत्यादिष्वग्निषु अनुपर्यायं क्रमेण नमः प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपत्न्यै स्वाहेत्येताभ्यां मन्त्राभ्यां पूर्ववच्चतुर्गृहीतमाज्यं जुहुयात् ॥ २ ॥

स्रुचि निहितस्य तस्य हिरण्यस्य प्रतिपत्तिं दर्शयति—

**अथ तद्धिरण्यं ब्रह्मणे दद्यात् ॥ ३ ॥**

प्रायश्चित्तहोमं पुनर्यज्ञत्वेन स्तौति—

**अथ यदाह यज्ञो वाव यज्ञस्य प्रायश्चित्तिरिति पुनर्यज्ञ एव स एते उ ह त्वेवाहुती यज्ञविभ्रष्टस्य प्रायश्चित्तिरिति ॥ ४ ॥**

अथशब्दो वाक्योपक्रमे । यज्ञो वाव पुनर्यज्ञ एव यज्ञस्य प्रायश्चित्तिरिति यदाह वेदः स एव पुनः यज्ञ एते उ ह यथोक्ते उभे त्वेवाहुती यज्ञविभ्रष्टस्य यज्ञन्यूनत्वस्य प्रायश्चित्तिरिति ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥

---

2. RSI. om. मन्त्राभ्यां; J adds गृहीत्वा after आज्यं.

4. MRSIK. om. स्रुचि निहितस्य; T. om. स्रुचि; T आहितस्य for निहितस्य; JT om. तस्य.

5. J. after दद्यात adds: अथैवं हुत्वा पश्चात् तद्धिरण्यं ब्रह्मणे दद्यात्.

6. R. ०श्चित्तं for ०श्चित्तहोमं.

11. J यज्ञो वाव यज्ञस्य प्रायश्चित्तिरिति for वेदः स एव; RTSK. om. उ ह; J om. यथोक्ते उभे.

12. J तद्गृह्णन्न्यूनत्वस्य for यज्ञन्यूनत्वस्य.

# तृतीयः खण्डः

अथ ऋत्विग्वरणं विधातुं स्तौति—

ते वा ऋत्विजः स यजमानः दैवा वा अन्य ऋत्विजो मानुषा अन्ये । यं दैवा याजयन्ति देवलोकमेव स तैरवरुन्धे । न मनुष्यलोकम् । अथ यं मानुषा याजयन्ति मनुष्यलोकमेव स तैरवरुन्धे । न देवलोकम् । अथ यमुभये याजयन्ति देवलोकं चैव स तैरवरुन्धे । मनुष्यलोकं च ॥ १ ॥

ते वै प्रसिद्धा एव ऋत्विजः स विख्यात एव यजमानः । तत्र दैवाः देवरूपा ऋत्विजः अन्ये तथा मानुषाः मनुष्यसंबन्धिनोऽप्यन्ये तत्र यं यजमानं दैवा ऋत्विजो याजयन्ति स यजमानः देवलोकमेव तैः ऋत्विग्भिः अवरुन्धे व्याप्नोति । न मनुष्यलोकम् । अथ पुनर्यं मानुषा ऋत्विजो याजयन्ति स यजमानो मनुष्यलोकमेव तैरवरुन्धे न देवलोकम् । अथ पुनः यं यजमानम् उभये दैवा मानुषाश्च ऋत्विजो याजयन्ति स देवलोकं च मनुष्यलोकं च तैः उभयैः ऋत्विग्भिः अवरुन्धे ॥ १ ॥

एवम् उभयविधान् ऋत्विजः प्रशस्य तत्र दैवर्त्विग्वरणं विधत्ते—

स एतान् दैवानृत्विजो वृणीत अग्निर्मे होतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाताकाशो मे सदस्य

---

3. Sh. देवता, M ते एते for ते वा ; M. देवा० for दैवा०.

4. M मानुष्या० for मानुषा० ; MTS. देवा for दैवा.

5. M मानुष्या० for मानुषा०.

8. RSI वाख्यातः, K व्याख्यातः for विख्यातः.

10. J adds तैर्दैवैर्हेतुभिः before देवलोकं ; MT हेतुभिः for ऋत्विग्भिः J. om. एव तैः ऋत्विग्भिः.

11. TIS मानुष्या for मानुषाः.

13. RKTM देवा for दैवा; R मनुष्या० for मानुषा०.

आपो मे होत्राशंसिनो रश्मयो मे चमसाध्वर्यवः ॥ २ ॥

स यजमानोऽग्निर्मे होतेत्यादिभिः सप्तभिः मन्त्रैः एतान् दैवानृत्विजो वृणीतेति ॥ २ ॥

अथानन्तरं मानुषर्त्विग्वरणं विधत्ते—

स एतान् दैवानृत्विजो वृत्वाथैतान् मानुषान् वृणीत । य एनमभिराधयेयुः ॥ ३ ॥

स यजमानः एतानुक्तान् दैवान् ऋत्विजो यथोक्तप्रकारेण वृत्वा अथ पश्चाद् एतान् मानुषान् ऋत्विजो वृणीत । ये ऋत्विजः एनमभिराधयेयुः सम्यक् स्वस्वकर्मानुष्ठानेन फलप्राप्तिसमर्थं कुर्युः । तत्रायमृत्विग्वरणप्रकारः । एतन्नामकेनैतत्संस्थेनैतत्पृष्ठेनैतावद्दक्षिणेन यज्ञेनाहं यक्ष्ये । तत्र मे त्वं होताध्वर्युरित्यादि ॥ ३ ॥

अथ देवयजनेषु विज्ञेयमुच्यते । तत्र प्रथमं क्षत्रियं प्रति देवयजनप्रार्थनां दर्शयति—

अथ क्षत्रियं देवयजनं याचेत् ॥ ४ ॥

अथशब्दो वाक्योपक्रमे । क्षत्रियं राजानं । देवयजनम्, देवा इज्यन्तेऽस्मिन् देश इति देवयजनं यागदेशस्तं याचेत् यजमानः प्रार्थयेत् ॥ ४ ॥

राज्ञा देवयजने दत्ते यजमानस्तु किं ब्रूयादित्यत्राह—

स चेत्तस्मै दद्याद्देवयजनवान् भूया इत्येनं ब्रूयात् ॥ ५ ॥

स राजा यद्यस्मै देवयजनं दद्यात् तर्हि तं राजानं त्वं देवयजनवान् भूया इत्याशीर्वचनं ब्रूयात् ॥ ५ ॥

विपर्यये वचनप्रकारं दर्शयति—

न चेत्तस्मै दद्याद्यदहं देवयजनं वेद तस्मिंस्त्वा वृश्चानीत्येनं ब्रूयात् ॥ ६ ॥

---

2. J. ०दिना प्रतिमन्त्रं for ०दिभिः सप्तभिः मन्त्रैः; R adds देवास्तान्, TK देवान् तान् after मन्त्रैः ; MTSK देवान् for दैवान्.

9. J फलाप्तेः for फलप्राप्ति०.

10. M. भवता हौत्रमाध्वर्यवमौद्गात्रं ब्रह्मत्वम् for मे त्वं होताध्वर्युः.

16. K. इष्यन्ते for इज्यन्ते; J om. प्रार्थयेत्.

18. M चैत्तदस्मै for चेत्तस्मै; KTIS. अस्मै for तस्मै.

अस्मै प्रार्थयित्रे यजमानाय स राजा देवयजनं यदि न दद्यात् तर्हि यद्देवयजनमहं वेद अन्यतो जानामि विन्दामीत्यर्थः । लब्धे तस्मिन् देशे त्वा त्वां वृश्चानि छिन्दानीत्येनं राजानं ब्रूयात् ॥ ६ ॥

यथोक्तं प्रशंसति—

अग्निर्वाव तद्देवयजनं भूमिर्वाव तद्देवयजनमापो वाव तद्देवयजनं श्रद्धा वाव तद्देवयजनम् । एतेषु ह वा एनं देवयजनेष्वावृश्चत्यथो हार्तिमेवापौरुषेयीं नेति ॥ ७ ॥

अग्निर्वाव अग्निरेव तद्देवयजनम् । अन्यदप्येवं व्याख्येयम् । एतेष्वग्न्यादिरूपेष्वेव देवयजनेषु एनम् अदातारं राजानम् आवृश्चति । अथो ह अत एव अपौरुषेयीं देवकृतां आर्तिमेवार्तिं नेति नयति । तस्मात् राजा देवयजनं याचितो दद्यादेव न निवारयेदित्यर्थः ॥ ७ ॥

एवं राजानं प्रति देवयजनप्रार्थनां दर्शयित्वा इदानीं ऋत्विजः प्रति तत्तत्प्रार्थनां दर्शयति—

अथ तत एत्यर्त्विजो देवयजनं याचेत् ॥ ८ ॥

अथ क्षत्रियं देवयजनं प्रार्थयित्वा (!) ततः क्षत्रियादेत्यागत्य ऋत्विजो होत्रादीन् देवयजनं यजमानो याचेत् ॥ ८ ॥

तत्प्रकारं दर्शयति—

अग्निर्मे होता । स मे देवयजनं ददातु । होतर्देवयजनं मे देहीत्युच्चैः । आदित्यो मेऽध्वर्युः । स मे देवयजनं ददातु । अध्वर्यो देवयजनं मे देहीत्युच्चैः । चन्द्रमा मे ब्रह्मा । स मे देवयजनं ददातु । ब्रह्मन् देवयजनं मे देहीत्युच्चैः ।

---

3. TK एवं for एनं; SRI. trans. राजानं after ब्रूयात् M. adds देवयजनवान् भूया इत्याशीर्वचनं after राजानं.
4. RIS. अथ for यथा.
9. J एवाग्निभूम्यापश्रद्ध० for अग्न्यादि०.
12. T om. दर्शयित्वा...प्रार्थनां ; RK om. इदानीं.
15. J om. अथ...याचेत्.

पर्जन्यो म उद्गाता । स मे देवयजनं ददातु । उद्गातर्देवयजनं मे देहीत्युच्चैः । आकाशो मे सदस्यः । स मे देवयजनं ददातु । सदस्य देवयजनं मे देहीत्युच्चैः । आपो मे होत्राशंसिनः । ते मे देवयजनं ददतु । होत्राशंसिनो देवयजनं मे दत्तेत्युच्चैः । रश्मयो मे चमसाध्वर्यवः । ते मे देवयजनं ददतु । चमसाध्वर्यवो देवयजनं मे दत्तेत्युच्चैः ॥ ९ ॥

मे मम अग्निरेव होता । सोऽग्निरूपो होता मे मह्यं देवयजनं ददातु इत्युपांशूच्चार्य होतर्मे देवयजनं देहीत्युच्चैर्मन्त्रयेत् । अन्यदप्येवं व्याख्येयम् ॥ ९ ॥

यथोक्तप्रकारं प्रशंसति—

ता वा एता देवता ऋत्विजामेव वाग्भिर्देवयजनं ददति । स दत्ते यजते ॥ १० ॥

ता एता अग्न्यादय एव देवता ऋत्विजां संबन्धिनीभिः प्रार्थनारूपाभिः वाग्भिः प्रार्थिताः सत्यो देवयजनं ददति । यजमानाय प्रयच्छन्ति । स च यजमानोऽग्न्यादिभिरेव दत्ते देवयजने यजते । न तु मानुषैर्दत्त इत्यर्थः ॥ १० ॥

कीदृशं देवयजनमित्याशङ्क्य तल्लक्षणं दर्शयितुमुपक्रमते—

यदुन्नतं भूम्या अनूषरं यत्र बहुला ओषधयश्चात्वालसारिण्यो यत्रापः स्युस्तस्य नु पुरः ॥ ११ ॥

यत् भूतलं भूम्याः स्वसमीपस्थाया भूमेरुन्नतं स्वयमेव । न तु समीपस्थं प्रदेशान्तरम् । उन्नतं तदेव देवयजनत्वेन ग्राह्यम् । तथा च द्राह्यायणः—न चास्य स्थलतरमदूरे स्यात् (१.१ १८) इति । अस्यार्थः । अस्य देवयजनस्यादूरे समीपे स्थलतरम् अत्युन्नतं देशान्तरं न

8. RSI. मन्त्रमुच्चारयेत् for मन्त्रयेत्.

10. J adds अथ देवेष्वेवं before यथो०.

19. R. om. तस्य न पुरः; M. पुरस्तात् for पुरः.

स्यात् । किं तु देवयजनमेव समीपदेशादुन्नतं भवेदित्यर्थः । किं च अनूषरम् ऊषररहितमेव भूतलं देवयजनस्य । एतस्यैव विवरणं यत्रेति । यत्र यस्मिन् भूतले ओषधयो बहुला वन्या भवेयुस्तदनूषरम् । ऊषरप्रदेशे तासामनुद्भवात् । अपि च यत्र यस्मिन् देशे चात्वालसारिण्यः चात्वालगामिन्यः आपः स्युः । यस्य चात्वालदेशस्य पुरः पुरस्तादापो न संचरन्ति तद्देवयजनं कार्यम् ॥ ११ ॥

विशेषणान्तरमाह—

तस्य न पुरस्ताद्देवयजनमात्रमतिशिष्याद्यावाञ्छम्याप्रासः ॥ १२ ॥

तस्य देवयजनस्य परिग्राह्यस्य भूतलस्य पुरस्तात् समीपभागे शम्यानिपातनात् अर्वाक् यावान् देशोऽस्ति तत्र पुरो देवयजनमात्रं देवयजनस्य यावत्प्रमाणं तावन्मात्रं प्रदेशं नातिशिष्यान्नातिशेषयेत् ॥ १२ ॥

तदवशेषणे प्रत्यवायमाह —

अपरपुरुषा हास्माच्छ्रेयांसो भवन्ति यस्यैवमतिरेचयन्ति ॥ १३ ॥

यस्य देवयजनस्य पुरस्ताद्भागे शम्यानिपातनादर्वागेव देवयजनमात्रमतिरेचयन्ति अतिशेषयन्ति अस्मात् तदवशेषादपरपुरुषा यजमानातिरिक्ता द्वेष्टार इत्यर्थः । ते श्रेयांसोऽतिशयेन प्रशस्या भवन्ति ॥ १३ ॥

---

2. RM. om. यत्रेति.
3. RIS अनूद, K. अन्यो T इन्यो for वन्या०; M. om. वन्या; M. उपेयुः for भवेयुः.
4. RKSI. om. यस्मिन; KT. तस्य for यस्य.
5. R. अनु for न.
9. J adds शम्याप्रासात् after ०भागे.
10. RI यावद् for यावान; J. तावत् for तत्र.
11. RKIS. प्रदेशात् for प्रदेशं; J adds नातिवर्तयेत् after ०शिष्यान् ०.
13. RI. अवर० for अपर०; J Sh Ms पापीयांसो० for श्रेयांसो०.
15. MTK अस्य for यस्य; MSK ०निपत० for ०निपात०.
16. RMISK om. अतिशेषयन्ति.
17. R. प्रशस्ता० for प्रशस्या०.

प्रसङ्गादेवयजनस्य दक्षिणभागे तद्योग्यदेशस्थितौ न दोष इत्याह—

**कामं दक्षिणत आगामुका हैनं दक्षिणा भवन्ति ॥ १४ ॥**

दक्षिणतः कामं यथेष्टमतिरेचयेयुः । तर्हि एनं यजमानं दक्षिणा आगामुका भवन्तीति ॥ १४ ॥

पश्चिमभागे तावदवशेषणे पुनः प्रत्यवायमाह—

**कामं पश्चादपरपुरुषा ह्यस्माच्छ्रेयांसो भवन्ति ॥१५॥**

कामम् इच्छया पश्चाद्भागे यदि तावन्मात्रदेशमवशेषयेयुः अस्मादपरपुरुषाः श्रेयांसो भवन्ति ॥ १५ ॥

उत्तरभागे तावन्मात्रदेशावशेषणे श्रेयःप्राप्तिं दर्शयति—

**काममुत्तरत उत्तरा हैनं देवयज्योपनामुका भवति । उत्तरोत्तरणी ह्यस्य श्रीर्भवति ॥ १६ ॥**

उत्तरतः कामम् इच्छयातिरेकः कार्यः तर्हि एनं यजमानम् उत्तरा अपि देवयज्योपनामुका भवति । प्राप्नोतीत्यर्थः । किं च अस्य श्रीः उत्तरोत्तरणी परंपरयापि वृद्धा भवति ॥ १६ ॥

धर्मान्तरं दर्शयति—

**यस्य पुरास्तात् त्रीणि ज्योतींषि दृश्येरन् । अग्निराप आदित्यस्तद्देवयजनं तत्त्रिशुक्रियम् ॥ १७ ॥**

यस्य देशस्य पुरस्तादग्निराप आदित्य इति त्रीणि ज्योतींषि दृश्येरन् तदेव देवयजनं कार्यम् । एवं सति तत् त्रिशुक्रियं शुक्रं ज्योतिः त्रिज्योतिष्कं

---

1. RS. प्रसङ्गादेव for प्रसङ्गाद्देव०; RKMIS. om. ०देश०.
5. M. प्राशस्त्यम् for प्रत्यवायम्.
6. M. पापीयांसो० for श्रेयांसो०; M. अवर० for अपर०.
7. M. अवर० for अपर०,
10. MK. ०यज्ञो० for ०यज्यो०.
11. RIS (उ)त्तरिणी for (उ)त्तरणी.
12. J. कामम् for कार्यः.
13. J अन्यापि, M अत्रापि for अपि; J adds पुनर्यागप्राप्तिः after अपि.
14. IS. ०त्तरिणी for ०त्तरणी; IRS विवृद्धा, M ०भिवृद्धा, K. विरुद्धा for ०पि वृद्धा.
19. RI. om. ज्योतिः त्रि; MTS. om. त्रि.

भवतीत्यर्थः । तत्र देवयजनस्य पुरस्ताद्भागेऽपामेवावस्थानं विधीयते । अग्न्यादित्ययोरवस्थानमनूद्यते । पुरस्ताद्भागे आहवनीयस्यावस्थाननियमात् आदित्यावस्थानस्य प्रत्यक्षसिद्धत्वात् ॥ १७ ॥

अपामभावे न्यग्रोधादिनापि भवितव्यमिति दर्शयति—

**पुरस्ताच्चित्रं देवयजनम् ॥ १८ ॥**

देवयजनं पुरस्तात् पुरोभागे चित्रं चित्रश्चित्रियो वनस्पतिः न्यग्रोधादिः, तद्युक्तमेव कार्यम् । तथा च द्राह्यायणः—अपामभावे महावृक्ष उदपानो महापथो वा (१.१.१७) इति । अस्यार्थः । नदीतटाकादीनामभावे महावृक्ष उदपानः कूपः महापथो वा ग्राह्यः ॥ १८ ॥

पश्चाद्भागे महावृक्षावस्थाने प्रत्यवायमाह—

**पश्चाच्चित्रं श्मशानकरणम् ॥ १९ ॥**

यदि देवयजनं पश्चात् चित्रं भवेत् तर्हि श्मशानकरणमेव स्यात् ॥ १९ ॥

धर्मान्तरमाह—

**प्रागुदक्प्रवणं देवयजनम् ॥ २० ॥**

पूर्वोत्तरदेशः प्रवणो निम्नो यस्य तत् तथोक्तम् ॥ २० ॥

देवयजनस्य अन्यप्रवणतां निन्दति—

**पश्चाद्दक्षिणाप्रवणं श्मशानकरणम् ॥ २१ ॥**

यथोक्तलक्षणं देवयजनं स्तौति—

**यथा वै दक्षिणः पाणिरेवं देवयजनम् ॥ २२ ॥**

यथा वै दक्षिणः पाणिः सर्वेषु पुण्यकर्मसु श्रेष्ठः एवं देवयजनं श्रेष्ठम् ॥ २२ ॥

---

2. R. ०नीयस्योप० for ०नीयस्याव०.

6. R. om. चित्रः, M. om. चित्रियो०, T. चित्रीयो, I चित्र्यो० for चित्रियो०.

7. RI. तद् for अपाम्.

8. J तरङ्गिणी० for नदी०.

16. J adds प्रागुदक्प्रवणम् । after तत्; J. तथा देवयजनं तैराप्यम् for तथोक्तम्.

17. R नैर्ऋत्याः M. नैर्ऋती, KI नैर्ऋत्य० for अन्य.

श्मशानकरणं निन्दति—

**यथा सव्यस्तथा श्मशानकरणम् ॥ २३ ॥**

यथा सव्यः पाणिः पुण्यकर्मसु गर्हितः एवं पश्चाच्चित्रत्वादिलक्षणं श्मशानकरणम् अप्रशस्तमित्यर्थः ॥ २३ ॥

आभिचारयज्ञेषु देवयजनलक्षणमाह—

**यथा श्मशानकरणं तथाभिचरणीयानां देवयजनम् ॥ २४ ॥**

अभिचरणीयानां श्येनादीनां यागानां देवयजनं यथा श्मशानकरणं पश्चाच्चित्रत्वादियुक्तं भवति तथा कुर्यात् । तथा च द्राह्यायणः—विपर्यस्य अभिचरणीयेषु स्थलादन्यद्देवयजनमात्राच्च (1. 1. 20; ला. 1. 1. 19) इति । अस्यार्थः । अभिचारार्थेषु क्रतुषु स्थलादुन्नताद्देवयजनमात्रात् पुरस्तात् देवयजनमात्रावशेषाच्च अन्यत् सर्वमनूषरत्वादिकं विपर्यस्य कुर्यादिति । एतदुक्तं भवति । ऊषरं विषमं पुरस्ताज्जलशून्यं पश्चाच्चित्रं दक्षिणाप्रत्यक्प्रवणं देवयजनं कार्यमिति ॥ २४ ॥

यथोक्तलक्षणदेशासंभवे किं याग एव परित्यज्यः ? नेत्याह—

**अप्यु हैक एवमाहुर्यस्मिन्नेव कस्मिंश्चिद् देशे श्रद्दधानो यजत ऋध्नोत्येवेति ॥ २५ ॥**

अपिशब्दस्त्वर्थे । एके अन्ये तु एवमाहुः । यस्मिन् कस्मिंश्चिद्देशे श्रद्दधानः अनेन फलं भवत्येवेत्यास्तिकः सन् यः यजते स ऋध्नोति यथोक्तफलं प्राप्नोत्येवेति ॥ २५ ॥

22 इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्याये तृतीयः खण्डः ॥ ३ ॥

---

8. MTK आभिचारिणां for अभिचरणीयानां.

11. J ०चरणीयेषु for ०चारार्थेषु ; M स्थलमुन्नतत्वात्, T ०स्थला[त्] उन्नतत्वात् for स्थलादुन्नतात्.

12. RIK add विपर्यासं after विपर्यस्य.

13. K तद्दक्षिणाप्रवणं, T प्रदक्षिणा०...for दक्षिणाप्रत्यक्प्रवणं.

15. J देशाभावे for देशासंभवे.

19. J. अत्र for अनेन.

## चतुर्थः खण्डः

अथावभृथधर्मा उच्यन्ते । तत्र प्रथमं यज्ञावशिष्टस्य द्रव्यस्यान्यत्र विनियोगाभावप्रदर्शनपुरःसरमपः प्रति नयनं विधत्ते—

**यावान् यज्ञे रसो भवति तेनात एव प्राचीनं प्रचरन्ति । अथैतद्यातयामं परिशिष्यते ऋजीषन्तन्ना[मा]ह । न तस्मै यद्वृथैवापास्येयुर्नो तस्मै यदग्नावनुप्रहरेयुस्तेनाप एवाभ्यवयन्ति ॥ १ ॥**

यज्ञे यावान् रसः सारभूतं यष्टव्यं द्रव्यं स्थितं तेन द्रव्येण अतोऽवभृतात् पूर्वमेव प्राचीनं प्राङ्मुखतया प्रचरन्ति चोदितानुसारेण प्रक्षिपन्ति जुह्वतीत्यर्थः । अथ पुनर्यद्यातयामं गतरसं तदेतत् परिशिष्यतेऽवशिष्टं भवति । तत् परिशिष्टं द्रव्यम् ऋजीषन्ना[मा]ह विद्वान् । तृतीयसवनस्यापि समाप्तत्वेन रसग्रहणार्थत्वाभावात् । किं च वृथैव अपास्येयुस्त्यजेयुरिति यत् तस्मा अपि न भवति । वृथा त्यागायापि न भवतीत्यर्थः । अपि चाग्नावनुप्रहरेयुरनुजुहुयुरिति यत् तस्मा अपि न भवति । पुनर्होमार्थमपि न भवतीत्यर्थः । तेन अन्यत्रोपयोगाभावेनाप एव अभ्यवयन्ति प्रतिनयन्ति ॥ १ ॥

याः प्रति यज्ञावशिष्टस्य नयनं ता अपः प्रशंसति—

**आपो वै सर्वस्य शान्तिः प्रतिष्ठा ॥ २ ॥**

---

5. RI ऋजीषंतन्नाहनत्, T ऋषीजन्नाह, M ऋषीजतन्वा हननं for ऋजीषन्तन्ना[मा]ह See CN.

8. MT अस्ति for स्थितं.

9. RIK. चोदितसारेण, M. चोदिताधारे, T चोदितासारे for चोदितानुसारेण; RKI प्रतिपान्ति for प्रक्षिपन्ति.

12. J om. अपास्येयुः; J त्याजयेयुः for त्यजेयुः.

सर्वस्य आप एव शान्तिः शान्तिकारणम् । किं च सर्वस्य जगत एव प्रतिष्ठा । अद्भ्यः पृथिवी (तै. उ. २.१.१) इति श्रुतेः ॥ २ ॥

तत्रैव प्रस्तोतृकृत्यं दर्शयति—

**पाप्मानं हैष हन्ति यो यजते । तमिमं पाप्मानं हतमपो हराणीति ॥ ३ ॥**

यो यजमानो यजते एष स्वयं पाप्मानमेव हन्ति । अतस्तमिमं पाप्मानं हतं पापस्य हन्तारं यजमानमपः प्रतिहराणीति प्रस्तोता मन्वीतेत्यर्थः ॥ ३ ॥

अवभृथगमने गन्तॄणां कंचिन्नियमं दर्शयति—

**तेनान्तरेण प्रतिपद्यन्ते चात्वालं चोत्करं च ॥ ४ ॥**

चात्वालम् चोत्करं चान्तरेण चात्वालोत्करयोर्मध्ये तेन पथा प्रतिपद्यन्ते अपः प्रतिगच्छेयुः ॥ ४ ॥

यथोक्तं मार्गं प्रशंसति—

**एतद्वै देवानां तीर्थम् ॥ ५ ॥**

एतद्वै एतदेव यथोक्तं मार्गस्वरूपं देवानां तीर्थम् । सर्वपापनिवारकत्वात् ॥ ५ ॥

उक्तार्थे मन्त्रसंमतिमाह—

**तदेतदृषिराहाम्नानं तीर्थं क इह प्रवोचद्येन देवाः पथा प्र पिबन्ते सुतस्येति ॥ ६ ॥**

---

1. R. ०कारणं, J ०कारिण्यः for कारणं; M. श्रान्तिः कारुण्यं, T शान्तिः कारुण्यं for शान्तिकारणम्

3. J प्रशंसापूर्वक० for प्रस्तोतृ०.

6. MTK स्वीयम् for स्वयम्.

7. R प्रस्तोतारमन्विते for प्रस्तोता मन्वीते०.

8. M पिबेत्, K. दृश्येत for मन्वीत.

9. MK. मन्त्रिणां for गन्तॄणां; KR. किंचित्, T. कंचन for कांचित्.

11. RKI. उत्करं चात्वालं for चात्वालं चोत्करं.

17. K adds यद्, M यदि before उक्तार्थे.

ऋषिः अतीन्द्रियार्थदर्शी सध्रीनामा ऋषिः धार्मो वा आह आम्नानं व्यापकं तीर्थम् इह लोके कः प्रवोचत् तस्य महिमानं को वा वदेदित्यर्थः । येन तीर्थरूपेण पथा मार्गेण आगत्य सुतस्य तस्य सुतं सोमं देवाः प्रपिबन्ते प्रकर्षेण पिबन्ति । इतिशब्दो मन्त्रसमाप्तिद्योतनार्थः ॥ ६ ॥

प्रकारान्तरेण तदेव प्रशंसति—

**एतद्वै देवानां तीर्थम् । अतीर्थं ह्येव यज्ञस्यातोऽन्यत् ॥ ७ ॥**

एतदेव देवानां संबन्धि तीर्थम् । अतोऽस्मादन्यत् यद्यज्ञस्य संबन्धि तद्तीर्थमेव ॥ ७ ॥

यथोक्तमर्थमुपसंहरति—

**तस्मादेतेनैव प्रसृते प्रपद्येत । एतेन निष्क्रामेत् ॥ ८ ॥**

यस्मादेवं तस्मात् यथा तेन मार्गेणैव प्रसृते प्रवेशे प्रपद्येत गच्छेत् तथा एतेनैव पथा निष्क्रामेत् अवभृथार्थं निर्गच्छेत् ॥ ८ ॥

तन्निर्गमनकाले रक्षोघ्नमवभृथसाम गेयमिति दर्शयितुमाख्यायिकया तत् प्रशंसति—

**तान् प्रच्युतान् देवयजनादप्राप्तानप एतस्मिन्नवकाशे रक्षांस्यजिघांसन् । स एतदग्नी रक्षोहा सामापश्यत् । तान्येतेनापाहत । तान्यमुर्ह्यपहतानि सन्तीति देवा अकुर्वान् । इत्येव रक्षांस्यपसेधति ॥ ९ ॥**

---

1. RI समृद्ध० K. स्मृद्ध०, T. समृद्धि० for सध्री०.

3. J वदति, M. वेद for वदेत्; MST तीर्थेन for तीर्थ०.

11. Sh Ms J प्रसुते for प्रसृते; MT add एव before निष्क्रामेत्.

12. J. मन्त्रेण for मार्गेण; J प्रसुते for प्रसृते; J. om. प्रवेशे; J. प्रविशेत् for गच्छेत्; RISK प्रतिपद्येत for प्रपद्येत.

17. TK तानन्तराप० for तान्येतेनापा०.

18. M तान्यमून्यप, TK तान्विमृद्धया वा for तान्यमुर्ह्यप; M adds इति after ०हतानि.

देवयजनात् प्रच्युतान् निर्गतान् अपः उदकानि अप्राप्तान् देवान् एतस्मिन्नवकाशे मध्ये मार्गे रक्षांसि राक्षसाः अजिघांसन् अपीडयन् । तत्र स यः प्रसिद्धो रक्षोहा रक्षसां हन्ता अग्निः, एतत् अग्निष्टपति (ग्रा. गे. १२.१२. ४६'१. ३) इत्यस्यामृचि गेयं सामापश्यत् । ततस्तानि रक्षांसि एतेन साम्ना अग्निरपाहत अवधीत् । तानि रक्षांसि अमुर्हि संग्रामे अपहतानि सन्ति अभूवन्निति देवा अकुर्वन् मनसि [अ]मन्यन्तेत्यर्थः । इत्येव अत एवैतदिदानीमपि रक्षांस्यपसेधति तेन साम्ना हिनस्ति इत्यर्थः ॥ ९ ॥

तत्र गाने किंचिद्विशेषमाह—

**तस्याहावोऽहाव इति स्तोभान्त्स्तोभयति । अहावोस्त्वहावोऽस्त्वित्येवैतद्रक्षांस्यपसेधति ॥ १० ॥**

तस्य साम्नः अहावोहाव इत्येवंरूपान् स्तोभान् स्तोभयति कुर्यादित्यर्थः । अत एवैतदिदानीम् अहावोऽस्त्वहावोऽस्त्वित्येवंवाक्यैः रक्षांस्यपसेधति निराकरोति ॥ १० ॥

सामाश्रयस्य मन्त्रस्य प्रथमपादमनूद्य व्याचष्टे—

**अग्निष्टपति प्रतिदहतीत्याह । रक्षांस्येव तत् प्रतिदहति ॥ ११ ॥**

अग्निष्टपति भृशं प्रकाशते तेन रक्षांसि प्रतिदहति इत्याह । तेन रक्षांस्येव तत् प्रतिदहति भस्मसात् करोति ॥ ११ ॥

---

2. RKISM मध्य० for मध्ये; T. मार्ग for मार्गे; M. adds एव after मार्गे; RIS. om. राक्षसाः; JT. अपाघ्नन् for अजिघांसन्.

3. RI om. यः.

4. TSK. अपश्यन् for अपश्यत्.

5. SRI om. अमुर्हि; M अमूनि, TK समृद्धि for अमुर्हि.

6. R. अभवन् for अभूवन्; SRI तस्मिन् यज्ञ इति, J अभिमन्यन्त इति, for मनसि अमन्यन्त इति; RJIS om. अत एव.

8. J. स्तोमे for गाने.

17. J द्रुतं for भृशं; J. om. रक्षांसि...तेन.

18. RIS. तर्हि for तत; K. om. तत.

प्रतिपादं स्तोभानुवृत्तिं दर्शयति—

**पादाय पादाय स्तोभा अनुवर्तन्ते रक्षसामपहत्यै ॥ १२ ॥**

यथोक्तस्तोभाः पादाय पादाय प्रतिपादम् अनुवर्तन्ते रक्षसामपहननाय ॥ १२ ॥

तस्यैव पादान्तरमनूद्य व्याचष्टे—

**विश्वं समत्रिणं दह विश्वं समत्रिणं दहेत्यत्रिणो वै रक्षांसि पाप्मानोऽत्रिणोऽत्रिण एवैतद्रक्षांसि पाप्मानमपसेधति ॥ १३ ॥**

विश्वं सर्वम् अत्रिणं मांसादेरत्तारं राक्षसं संदह । द्विरुक्तिरावृत्तिद्योतनार्था । इति यदा तेन पाप्मान एवात्रिणोऽत्रिण एव रक्षांसि रक्षसामेतद्रूपं पाप्मानमेवापसेधति ॥ १३ ॥

यथोक्तसाम्नो निधने त्रिरावृत्तिं दर्शयति—

**तस्य त्रिर्निधनमाहुः ॥ १४ ॥**

तस्य साम्न इति यन्निधनं तत् त्रिस्त्रिवारम् आवर्तयेदित्याहुः ब्रह्मवादिनः ॥ १४ ॥

उक्तां त्रिरावृत्तिं स्तौति—

**इयं वै सुहतं घ्नन्ति न स पुनरुद्रिङ्क्ते यथाह पुनः पुनरादाय सुहतं हन्यात्ताद्दगेतत् ॥ १५ ॥**

इयं वै इयं निधनत्रिरावृत्तिरेव राक्षसं सुहतं घ्नन्ति हन्ति । वचनव्यत्ययश्छान्दसः । अथ स राक्षसः पुनर्नोद्रिङ्क्ते । नोत्तिष्ठेदित्यर्थः । यथा ह

---

1. K. प्रतिपदं for प्रतिपादं.
2. MISK. पदाय पदाय for पादाय पादाय.
15. T. after साम्न adds एव; M. after इति adds यन्निधनमाहुरिति.
18&20. K Sh MS यं for इयं; J उद्रुक्ते, M उद्रक्के, I उद्रिक्ते for उद्रिङ्क्ते.
21. R. उत्तिष्ठेत् for नोत्तिष्ठेत्.

यथा खलु लोके सुहतं सुष्ठु हन्तव्यम् उपद्रवकारिणं पुनःपुनरायुधम् आदाय कं न हन्यात्? एतत् त्रिर्निधनोच्चारणं हि तादृग् राक्षसहननायेत्यर्थः ॥ १५ ॥

तस्य स म्नोऽतिच्छन्दसि गानं दर्शयति—

**तद्वा अतिच्छन्दःसु भवति ॥ १६ ॥**

तदेतत् साम अतिच्छन्दःसु भवति । बहुवचनम् अध्वर्युप्रैषभेदायत्तावृत्त्यपेक्षया, न तु स्वरूपेण । एकत्वादृचः ॥ १६ ॥

यथोक्तातिच्छन्दः प्रशंसति—

**वारणमिव वा एतच्छन्दो यदतिच्छन्दा वारणानीव रक्षांस्यरण्यायतनानि । तद्यथा स्वमरण्यमभयेनातिक्रामेत्तादृगेतत् ॥ १७ ॥**

एतच्छन्दः वारणमिव वै रक्षसां निवारकमेव खलु । यत् येन अतिच्छन्दा अयं मन्त्रः । यत एव रक्षांसि वारणानीव निवारणीयान्येव अरण्यायतनानि अरण्यगृहाणि भवन्ति । तत् तस्माद्रक्षोवर्गः स्वं स्वीयमरण्यम् अभयेन स्वारस्येन यथातिक्रामेत् गच्छेत् एतदतिच्छन्दोऽपि तादृक् तथा रक्षसामरण्यप्रापकम् ॥ १७ ॥

किं तदतिच्छन्दः यस्मिन् अतिच्छन्दस्येतदवभृथसाम गायेदित्यत्राह—

**तद्वै सप्तपदासु भवति ॥ १८ ॥**

सप्तपदासु सप्तपदोपेतासु ऋक्षु एतत्साम भवति । बहुवचनं गानावृत्त्यपेक्षया ॥ १८ ॥

---

1. J adds पुरुषं after ०कारिणं.
2. J. किं तु, M किं for कं.
6. M अध्वर्युं प्रति प्रैषभेदाय त्रिरा० for अध्वर्युभेदायत्ता०.
7. J. भेदार्थम् for भेदायत्ता०, R. om. ०भेद०; J om. न तु.
14. RIS. रक्षोवत् for रक्षोवर्गः.
17. J om. अतिच्छन्दसि ; R. om. अवभृथसाम.
19. S. ०पादास्वेवैतासु for ०पदोपेतासु.
20. M. गानादिविवक्षया, I गानप्रत्यपेक्षया for गानावृत्त्यपेक्षया...

यथोक्तां संख्यां स्तौति—

**सप्त वै छन्दांसि चतुरुत्तराणि तद्यथा सर्वैः छन्दोभिरभयेनातिक्रामेत्तादृगेतत् ॥ १९ ॥**

चतुरुत्तराणि उत्तरोत्तराधिक्येनाक्षरचतुष्टयोपेतानि गायत्र्यादीनि छन्दांसि सप्त वै सप्तैव। तत् तेन यथा लोके सर्वैः छन्दोभिरभयेन भयराहित्येनातिक्रामेत् सर्वं दुरितम्। एतदपि तादृक् रक्षोनिवारकम् ॥ १९ ॥

प्रशंसापूर्वकमवभृथसाम्नः त्रिर्गानं दर्शयति—

**तस्य त्रिर्वचन एकविंशतिः पदानि त्रिः सामाह तच्चतुर्विंशतिः ॥ २० ॥**

अग्निं होतारम् (सा. ४६५) इत्यस्यामृचि साम त्रिराह त्रिर्गायेत्। तस्य त्रिर्वचने सति पदानि पादा एकविंशतिः सामानि त्रीणि भवन्ति। तत् तथा सति चतुर्विंशतिसंख्या संपद्यते। अतस्त्रिर्गानं प्रशस्तमित्यर्थः ॥ २० ॥

यथोक्तां संख्यामुपजीव्य पुनस्तत्संवत्सरात्मना स्तौति—

**चतुर्विंशतिरर्धमासाः संवत्सरः। संवत्सरः साम ॥२१॥**

संवत्सरश्चतुर्विंशतिरर्धमासाः। अतः सामापि चतुर्विंशतिसंख्यासाम्यात् संवत्सरः ॥ २१ ॥

संवत्सरसाम्यं साम्न उपपादयति—

**तस्य ह वा एतस्य संवत्सरस्य साम्नोऽहोरात्राणि हिंकारोऽर्धमासाः प्रस्तावो मासा आदिर्ऋतव**

---

10. J अग्निष्टपति, T अष्टपदी for अग्निं होतारम.

11. RIS. om. तस्य; SRI. त्रिरावृत्तौ प(SI पा०)दानाम for त्रिर्वचने सति पदानि पादा; M. om. तस्य...पदा; M. ०विंशतिपदानि निधनानि for ०विंशतिः सामानि.

13. R. यथोक्त० for यथोक्तां; R. ०त्मकं for ०त्मना.

15. M. ०विंशतिपदसंख्यं संख्यासाम्यात for ०विंशतिसंख्यासाम्यात् ...

16. K. साध्यात for साम्यात्.

**उद्गीथः पौर्णमास्यः प्रतिहारोऽष्टका उपद्रवोऽमावास्या निधनम् ॥ २२ ॥**

तस्यैतस्य संवत्सरस्य संवत्सरात्मकस्य च साम्नो हिंकार एवाहोरात्राणि । प्राथम्यसाम्यात् । प्रस्ताव एवार्धमासाः । प्रस्तूयमानत्वसाम्यात् । आद्याख्या भक्तिरेव मासाः । श्रेष्ठत्वसाम्यात् । उद्गीथ एव ऋतवो वसन्तादयः । मुख्यत्वसाम्यात् । प्रतिहारभक्तिरेव पौर्णमास्यः । प्रतिहरणसाम्यात् । उपद्रवाख्या भक्तिरेवाष्टकाः । निधनमेवामावास्याः । समाप्तिसाम्यात् ॥ २२ ॥

एवं साम्नः सप्तभक्तिपक्षे संवत्सरसाम्यमुपपाद्य इदानीं पञ्चभक्तिपक्षे तत्साम्यमुपपादयति—

**तस्य ह वा एतस्य संवत्सरस्य साम्नो वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ॥ २३ ॥**

तस्यैतत्तस्य संवत्सरात्मकस्य साम्नो हिंकारादय एव वसन्तादय इत्यर्थः ॥ २३ ॥

हेमन्तस्य निधनसाम्यं दर्शयति—

**तस्माद्धेमन्तं प्रजा निधनकृता इवासते निधनरूपमेवैतर्हि ॥ २४ ॥**

तस्मात् अत एव हेमन्तम् ऋतुं प्रजाः सर्वा निधनकृता निधनकारिण्य उपसंहृतव्यापारा इवासते एतर्हि एवं च सति निधनरूपमिव हेमन्तस्य रूपम् । व्यापारोपरतिसाम्यात् ॥ २४ ॥

---

1. KTI पौर्णमास्याः for पौर्णमास्यः.

3. M. after हिंकारः adds एवादौ क्रियमाण.

4. J. अर्धमासाः प्रस्तावः for प्रस्ताव एवा०...०साम्यात्.

5. MT. आद्या for आद्याख्या; M. आद्या भवन्ति ओंकाराः for आद्याख्या भक्तिरेव.

19. J एतं for अत एव.

21. RK अस्योप० for व्यापारोप०.

एवं रक्षोघ्नमवभृथसाम दर्शयित्वा इदानीं प्राच्यादिषु चतसृषु दिक्षु ऐच्छिकविकल्पेन प्रश्नपूर्वकमवभृथगमनं दर्शयितुं वृद्धानां प्रश्नं तावदुपक्षिपति—

**तदाहुः कां दिशमवभृथमभ्यवेयुरिति ॥ २५ ॥**

तदाहुः कां दिशमभिलक्ष्य अवभृथमभ्यवेयुः । ऋत्विजः प्रयन्तीति ॥ २५ ॥

तत्र प्रथमं कल्पं सप्ररोचनमाह—

**प्राञ्चोऽभ्यवेयुर्देवानां वा एषा दिग् यत्प्राची । या देवानां दिक् तां नोऽनु यज्ञः संतिष्ठाता इति ॥ २६ ॥**

प्राञ्चः प्रागभिमुखाः सन्तोऽभ्यवेयुः अवभृथार्थम् अपः प्रतिगच्छेयुः । एषा दिक् देवानां संबन्धिनी खलु । यत् या प्राची । या देवानां दिक् नोऽस्माकं यज्ञः तां दिशमनुसंतिष्ठातै । तिष्ठतेर्लेटि एत ऐ (पा. ३.४.९३) इत्यैकारः । प्रतिष्ठितो भवत्विति । प्राचीमेनम् (०मनु?) इत्यर्थः ॥ २६ ॥

द्वितीयं कल्पं सप्ररोचनं दर्शयति—

**दक्षिणाभ्यवेयुः पाप्मानं हैष हन्ति यो यजते तमिमं पाप्मानं हतं दक्षिणा हराणीति पितृणां वा एषा दिग् यद्दक्षिणा । या पितृणां दिक् तां नोऽनु यज्ञः संतिष्ठाता इति ॥ २७ ॥**

---

1. J. om. चतसृषु; J after दिक्षु adds एकैकम्.
2. RI ०गानं for ०गमनं.
3. J. ०शिक्षति for ०क्षिपति.
5. RIS om. तदाहुः; M. व्रतिनः प्रशंसति for तदाहु...प्रयन्तीति; T क्षादिनः पृच्छन्ति K क्षदिनः प्रशन्ति (!) for ऋत्विजः प्रयन्ति.
10. J. एव for अपः.
11. J adds सा before एषा; M. तां नोऽनुयज्ञः संतिष्ठता इति for प्राची.
12. M. ०र्लिटि, TIK ०र्लटि for ०र्लेटि.
13. RJ ०गमनम्, IS. एनाम् for प्राचीमेनम् (०मनु?).
15. TSK हि for ह.
16. T हतनिष्पापं यजमानं for हतं.

दक्षिणा दक्षिणतोऽभ्यवेयुः अत एव एष यजमानः पाप्मानमेव हन्ति यो यजते. तमिमं पाप्मानं हतं निष्पापं यजमानं दक्षिणा हराणि नयानीति प्रस्तोता ब्रवीति । एषा दिक् पितॄणां संबन्धिनी खलु । यत् या दक्षिणा । तथा च श्रुत्यन्तरं—देवमनुष्या दिशो व्यभजन्त । प्राचीं देवाः, दक्षिणां पितरः, प्रतीचीं मनुष्या इति । स्पष्टमन्यत् ॥ २७ ॥

कल्पान्तरं सप्रोचनमाह—

प्रत्यञ्चोऽभ्यवेयुर्मनुष्याणां वा एषा दिक् यत् प्रतीची । या मनुष्याणां दिक् तां नोऽनु यज्ञः संतिष्ठाता इति ॥ २८ ॥

पूर्ववद्व्याख्येयम् ॥ २८ ॥

पक्षान्तरं सप्रोचनमाह—

उदञ्चोऽभ्यवेयुर्नक्षत्राणां वा एषा दिग् यदुदीची । या नक्षत्राणां दिक् तां नोऽनु यज्ञः संतिष्ठाता इति ॥ २९ ॥

उदङ्मुखा अवभृथमभ्यवेयुः । एषा दिक् नक्षत्राणां स्वभूता या उदीची । नक्षत्राधिपतेः सोमस्य संबन्धित्वात् । स्पष्टमन्यत् ॥ २९ ॥

यथोक्तानां दिशां मध्ये यस्यां दिशि भूयिष्ठा आपो भवन्ति तत्रैव गच्छेयुरिति नियमं दर्शयति—

अतो वाव यतमथैव कतमथा चापः स्युः तदभ्यवेयुः ॥ ३० ॥

---

2. J या पितॄणां दिक् तां नोऽनु यज्ञः संतिष्ठता इतीति दक्षिणा हारिणी नयानीति प्रस्तोता ब्रवीति । सा एषा दिक् पितॄणां संबन्धिनी खलु या दक्षिणा for हराणि नयानीति...व्यभजन्त.

6. J before कल्पान्तरं adds तृतीयं कल्पं; J दर्शयति for आह.

11. J कल्पा० for पक्षा०.

14. R. ०भृथार्थम् for भृथम्.

18. SK अथो for अतो.

अतो वाव यतमथा कतमथा यस्यां कस्यां दिशि । बहूनां दिशां प्रकृतत्वात् । निर्धारणे डतमप् । आपो भूयिष्ठाः स्युः तत्राभ्यवेयुः गच्छेयुः । न तत्र प्राच्यादिदिङ्नियम इत्यर्थः ॥ ३० ॥

यथोक्तार्थविदं प्रशंसति—

यद्वै विद्वान् कर्म करोत्यस्मादिदमिति वसीयानेव तेन भवति ॥ ३१ ॥

अस्मात् कर्मणः इदं श्रेयो भवतीति विद्वान् जानन् यत् कर्म करोति । तेन कर्मणा वसीयान् अतिशयेन वसुमानेव भवति ॥ ३१ ॥

नद्यादिषु वा तटाकादिषु वा अवभृथगमनमिति विचारपूर्वकं व्यवस्थित-विकल्पं दर्शयितुं विचारं तावदाह—

तदाहुः स्रवन्तीष्वभ्यवेयू३स्थावरासू३ इति ॥ ३२ ॥

तदाहुः तत्र ब्रह्मवादिन आहुः स्रवन्तीषु चलास्वप्सु अभ्यवेयुः अवभृथार्थं गच्छेयुः । स्थावरासु अचलासु वेति । प्लुतौ विचारार्थौ ॥ ३२ ॥

तत्राद्यं पक्षं सप्रशंसं दर्शयति—

स्रवन्तीष्वभ्यवेयुः । पाप्मानं हैष हन्ति यो यजते तमिमं पाप्मानं हतमपः प्रवहतामिति ॥ ३३ ॥

स्रवन्तीषु अप्सु अभ्यवेयुः । एष पाप्मानं हन्त्येव यस्तत्र यजते । तमिमं पाप्मानं हतं हतपाप्मानं अपः प्रति [प्र]वहताम् । यज्ञः प्रापयत्विति स्रवन्तीषु गमनमित्यर्थः ॥ ३३ ॥

---

1. TSK अथो for अतो०; RSI यतमथैव for यतमथा; RI add च and S वा after कथमथा.

7. R इति for इदं; J जानानः for जानन्.

12. J. तदाहुः for तत्र.

17. RMISK om. अभ्यवेयुः; J पाप्मानं हैष हन्ति यो for एष...यस्तत्र.

18. JT हतं पापं for हतपाप्मानं; MI ०पाप्मानः for ०पाप्मानं; T. अतः for अपः ; M. यज्ञ अपः सन्ति तास्वभ्यवेयुः । अवभृथार्थमत्यर्थ(मित्यर्थः ?) for यज्ञः...गमनमित्यर्थः.

सप्रसंगं पक्षान्तरमाह—

**स्थावरा याः शीपल्यास्तास्वभ्यवेयुः । इतो मा यज्ञो विक्षुब्धः प्रत्युपतिष्ठाता इति ॥ ३४ ॥**

याः स्थावराः अचलाः [शीपल्याः] शैवलयुक्ताश्च आपः सन्ति तास्वभ्यवेयुरवभृथार्थम् । इतोऽस्मात् कृतोऽङ्गयो यज्ञो विक्षुब्धः सन् मा प्रत्युपतिष्ठातै । मा गच्छत्विति । शैवलास्वप्सु गमनमित्यर्थः । अत्र संभवासंभवाभ्यां विकल्पो व्यवस्थितो द्रष्टव्यः ॥ ३४ ॥

नदीतटाकयोर्मध्ये यत्रापो भूयिष्ठास्तत्रैव गच्छेयुरिति नियममाह—

**अतो वाव यतरथैव कतरथा चापः स्युस्तदभ्यवेयुः ॥ ३५ ॥**

अतो वाव अपि च यतरथा कतरथा चैव यत्रकुत्रचित् । पक्षद्वयस्य पूर्वमुपन्यस्तत्वात् द्वयोरेकतरस्य निर्धारणार्थे तरप् । आपो भूयिष्ठाः स्युः । तत्रैव अभ्यवेयुरिति ॥ ३५ ॥

उक्तार्थविदं प्रशंसति—

**यद्वै विद्वान् कर्म करोत्यस्मादिदमिति वसीयानेव तेन भवति ॥ ३६ ॥**

व्याख्यातचरमेतत् ॥ ३६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

2. TIS. शैवल्या॰ for शीपल्या॰

4. J. शैवल्याः, RTISK शैवलवत्यः for शीपल्याः.

5. RTISK om. इतः; and कस्मात् for अस्मात्; RIS तेभ्यो, M. कुतो हेतोः for कृतोऽङ्गयो॰

12. JMTIK तरच् for तरप्.

## पञ्चमः खण्डः

अथाभिचरणीययज्ञेषु एकस्यै हिंकरोतीत्याद्याः पञ्चानुवाकाः त्रिवृदादीनां त्रिणवपर्यन्तानां विष्टुतिचोदनाः । तत्र त्रिवृत्स्तोमस्येषुसंज्ञिके द्वे विष्टुती स्त इति तद्विधायकं ब्राह्मणमेवमाम्नायते—

**एकस्यै हिंकरोति स प्रथमया । तिसृभ्यो हिंकरोति स मध्यमया । पञ्चभ्यो हिंकरोति स उत्तमया । एकस्यै हिंकरोति स प्रथमया । तिसृभ्यो हिंकरोति स पराचीभिः । पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः । इषुस्त्रिवृतो विष्टुतिः ॥ १ ॥**

प्रथममुद्गाता एकस्यै एकामृचं गातुं हिंकरोति हिंकारं कुर्यात् । क्रियार्थोपपदस्य च कर्मणि (पा. २. ३ १४) इति सर्वत्र चतुर्थी । सः हिंकर्ता प्रथमया ऋचा गायेदिति शेषः । ततः तिसृभ्यः तिस्र ऋचो गातुं हिंकरोति । स मध्यमया द्वितीयया त्रिर्गायेत् । पञ्चभ्यो हिंकरोति । स हिंकर्ता उत्तमया तृतीयया ऋचा पञ्चकृत्वो गायेदित्येका विष्टुतिः । अथ एकस्यै हिंकरोति । स प्रथमयेति पूर्ववद्व्याख्येयम् तिसृभ्यो हिंकरोति । स पराचीभिस्तिसृभिः ऋग्भिः आनुलोम्येन गायेदित्यर्थः । पञ्चभ्यो हिंकुर्यात् । स प्रथममेकया गायेत् । ततः स एकया द्वितीयया गायेत् । स हिंकर्तोद्गाता तिसृभिः तृतीयया ऋचा त्रिर्गायेदिति । एवं त्रिवृत इषुसंज्ञिका विष्टुतिर्द्वितीयेत्यर्थः ॥ १ ॥

अनया कर्तव्यतां दर्शयति—

**अभिचरन्स्तुवीत ॥ २ ॥**

---

3. M JRSIK ०संज्ञके for ०संज्ञिके.

10. J adds सः before प्रथमम् .

13. J. Subst मध्यमयेति मध्यमया ऋचा for मध्यमया; J. तृतीयया for द्वितीयया.

14. J अतः for अथ.

17. RSIK अतो for ततः and om. स एकया; J. द्विविधा for द्वितीयया; RSIK सकृत् for गायेत्.

एतया द्विविधया विष्टुत्या अभिचारकर्म कुर्वाणः स्तुवीतेत्यर्थः ॥ २ ॥

अस्या विष्टुतेरिषुणा साम्यं दर्शयति—

**अनीकं प्रथमा । इषुर्धनुर्ज्या यत्तिस्रः संदधाति, ऽयेव पञ्चभिः सृजते ॥ ३ ॥**

उभयत्राद्ये पर्याये प्रथमा ऋक् अनीकम् इषुधारास्थानीयम् । मध्यमे पर्याये यत् यास्तिस्रो गीतिनिष्पन्ना ऋचः संदधाति [संधानं] करोति ता इषुः शरः धनुश्च ज्या मौर्वी चेति तिस्र एतत्स्थानीया इत्यर्थः । एताभिः द्विविधाभिः शरं शरासने संदधाति खलु । एवमेव पञ्चभिः, उक्ताः पर्यायास्ताभिः सृजते । धनुषि संहितमिषुं लक्ष्यदेशं प्रति विसृजति । अत्रानीकादिविसर्जनान्ताः पञ्च संस्थाः शरे विवर्तन्त इति तत्साम्यं द्विविधाया विष्टुतेर्युक्तमित्यर्थः ॥ ३ ॥

तत्प्रशंसति—

**स्तृणुते भ्रातृव्यं वसीयानात्मना भवति य एतया स्तुते ॥ ४ ॥**

य एतया विष्टुत्या स्तुते स भ्रातृव्यं सपत्नं स्तृणुते हिनस्ति । स्तृ-हिंसायाम् इति धातुः । आत्मना स्वेनैव अन्यनैरपेक्ष्येण वसीयान् अतिशयेन वसुमान् भवतीति ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

3. MIK इषुधनुर् for इषुर्धनुर्.

5. MTK add इति after ऋक्; RI इषुः रणस्थानीयां for इषुधारास्थानीयम्; M ०स्थानीया, T ०प्रस्थानीयां K ०स्थानीयान् for ०स्थानीयम्.

6. J तदासन्नं for शरः धनुश्च.

7. RIS. om. च after धनुश्; KTM. Subst. द्विशरं for दिविधाभि: शरं.

8. J ०सनं ज्यां संदधाति for ०सने संदधाति; RIS परम्, KT पवम् for एवम्; J एभिरुक्तैः अपशर्व्यां आयामस्थाभिः, R. उत्तमपर्यायस्ताभिः KT उक्ता पर्यायस्ताभिः for उक्ताः पर्यायास्ताभिः.

9. RJS. धनुःषु for धनुषि; RJTKSI संहिताम् for संहितम्; RISK इषु० for इषुं.

10. TRJI. शरेऽपि for शरे वि०.

13. MRIS हिंसति for हिनस्ति.

## षष्ठः खण्डः

पञ्चदशस्तोमस्य विष्टुतिविधायकं ब्राह्मणमेवमाम्नायते—

**तिसृभ्यो हिंकरोति । स पराचीभिस्तिसृभ्यो हिंकरोति । स पराचीभिर्नवभ्यो हिंकरोति । स तिसृभिः स तिसृभिः स तिसृभिः ॥ १ ॥**

आद्यावुभौ पर्यायौ पराचीभिरानुलोम्येन पठिताभिस्तिसृभिः ऋग्भिः कार्यौ । तृतीयः पर्याय एकैकस्या ऋचस्त्रिरावृत्त्या कार्य इत्यर्थः । पञ्चदशस्य विष्टुतिरिति ॥ १ ॥

अथास्यां कर्तव्यत्वं दर्शयति—

**अभिचरन्स्तुवीत ॥ २ ॥**

उक्तं पञ्चदशं स्तौति—

**वज्रो वै त्रिवृत् । वज्रस्त्रिणवः । यत्त्रिवृत्त्रिणवाभ्यां पञ्चदशं विदधाति । वज्रमेव तत्सम्यक् संदधाति ॥ ३ ॥**

वज्रो वै वज्र एव त्रिवृत्स्तोमः । त्रिणवस्तोमोऽपि वज्रः । तस्य त्रयस्त्रिवृत एवेति । त्रिणवस्य वज्रत्वं त्रिवृत्त्वसद्भावात् । एतावता किं कृतमित्यत उक्तं यद्येवं त्रिवृत्त्रिणवाभ्यां उभाभ्यां स्तोमाभ्यां पञ्चदशस्तोमं विदधाति [तर्हि] वज्रमेव तत्सम्यक् संदधातीति । तिसृभिस्त्रिवृतो विधानं

---

9. JMTK. om. अस्यां; I. अस्य for अस्यां.

14. MTK वज्रम for वज्रः· J adds वज्रस्य after तस्य.

15. RJ om. त्रयः; J adds वज्रस्य after त्रिणवस्य; J त्रिवृत्स्वभावात्, M. तृवत्तत् संभवात् for त्रिवृत्त्वसद्भावात्.

16. TISK om. अतः; J M om. उभाभ्यां; T om. पञ्चदश.

17. JTRIS. om. वज्रमेव...संदधाति. See CN; M. विधानात् for विधानं

नवभिः त्रिणवस्येति । तत् तेन वज्रमेव सम्यक् समीचीनं संदधाति । अवयविनं वज्रं वज्रावयवेन संदधातीत्यर्थः ॥ ३ ॥

वज्रस्य त्रिवृत्त्रिणवसादृश्यं दर्शयति—

एवमिव वै वज्रः साधुः । यदारंभणतोऽणीयान् प्रहरणतः स्थवीयान् ॥ ४ ॥

एवमिव वै एवमेव खलु वज्रः साधुः शत्रूणां साधको भवति । यद् यस्मादयं वज्रः आरम्भणतः प्रथमतः ग्रहणप्रदेशे अणीयान् अणुतरो भवति । प्रहरणतः प्रहरणप्रदेशे शल्ये स्थवीयान् । स्थूलतरो भवति । अत्रापि प्रथमसंख्या नवसंख्यापेक्षया अल्पा । नवसंख्या अधिका । अन्यसंख्याया अभिहितत्वात् ॥ ४ ॥

तत्प्रशंसति—

तेन पाप्मानं भ्रातृव्यं स्तृणुते । वसीयानात्मना भवति य एतया स्तुते ॥ ५ ॥

य एतया स्तुते तेन पाप्मानं भ्रातृव्यं स्तृणुते हिनस्तीति । शिष्टं स्पष्टम् ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्याये षष्ठः खण्डः ॥ ६ ॥

---

1. M. नवतिं for नवभिः.

9. RI प्रथमं त्रिवृतो for प्रथमसंख्या; TK. प्रथमत्वसंख्यापेक्षया for प्रथमसंख्या नवसंख्या...पेक्षया; RSI अल्पत्वं, M. अनल्पा for अल्पा; KMT ०संख्यादिका RIS. संख्याया अधिकाया for ०संख्या अधिका.

14. J. यत एवं for य एतया; MTK एव for एतया; JMT om. एतया.

## सप्तमः खण्डः

सप्तदशस्तोमविष्टुत्या कर्तव्यतां दर्शयति—

**एतयैवाभिचरन्त्स्तुवीत ॥ १ ॥**

एतया वक्ष्यमाणया विष्टुत्या अभिचरन् शत्रून् जिघांसुः स्तुवीत ॥ १ ॥

सप्तदशं स्तौति—

**वज्रो वै त्रिवृत् । वज्रः पञ्चदशः । वज्रः त्रिणवः । यत् त्रिवृत्पञ्चदशत्रिणवैः सप्तदशं विदधाति वज्रमेव तत्सम्यक् संदधाति ॥ २ ॥**

वज्रस्य त्रिवृत्त्वं सुप्रसिद्धम् । वज्रः पञ्चदशः । एतस्यैन्द्रत्वात् । वज्रस्त्रिणवः । यत् यस्मात् त्रिवृदादिभिः सप्तदशं विदधाति । तिसृभिः त्रिवृतो विधानम्, पञ्चभिः पञ्चदशस्य नवभिः त्रिणवस्य । एतदुक्तं भवति । तिसृभिः पराचीभिः प्रथमः पर्यायः । पञ्चभिः मध्यमो नवभिरुत्तम इति । तत् तेन वज्रमेव वज्रावयवे सम्यक् संदधातीति ॥ २ ॥

वज्रस्य त्रिवृदादिसादृश्यं दर्शयति—

**एवमिव वै वज्रः साधुः यदारम्भणतोऽणीयान् प्रहरणतः स्थवीयान् ॥ ३ ॥**

अत्र पञ्चदशापेक्षया त्रिवृतोऽल्पसंख्या । तस्यापि त्रिणवापेक्षयेति । शिष्टं व्याख्यातम् ॥ ३ ॥

तत्प्रशंसति—

**तेन पाप्मानं भ्रातृव्यं स्तृणुते । वसीयानात्मना भवति । य एतया स्तुते ॥ ४ ॥**

एतया सप्तदशविष्टुत्या । समानमन्यत् ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्याये सप्तमः खण्डः ॥ ७ ॥

---

2. J adds अथ before सप्त; RIS. ॰विष्टुत्याः for ॰विष्टुत्या;
9. J (ए)व तथात्वात् for (ऐ)न्द्रत्वात्.
10. MIK add इति after विदधाति.

# अष्टमः खण्डः

अथैकविंशतिस्तोमस्य विष्टुतिविधायकं ब्राह्मणमेवाम्नायते––

तिसृभ्यो हिंकरोति । स पराचीभिर्नवभ्यो हिंकरोति। स तिसृभिः स तिसृभिः स तिसृभिर्नवभ्यो हिंकरोति । स तिसृभिः स तिसृभिः स तिसृभिरभिचरन्त्स्तुवीत ॥ १ ॥

तिसृभ्यः तिस्रो गातुं हिंकुर्यात् । सः हिंकर्ता पराचीभिरानुलोम्येन पठिताभिः आद्यं पर्यायं कुर्यादिति शेषः । उत्तरौ एकैकस्या ऋचः त्रिरावृत्या कार्यावित्यर्थः । अनया एकविंशस्तोमविष्टुत्या अभिचरन् पुरुषः स्तुवीतेति शेषः ॥ १ ॥

उक्तमेकविंशं स्तौति––

वज्रो वै त्रिवृद् । वज्रः त्रिणवः । यत्त्रिवृत्त्रिणवाभ्यामेकविंशं विदधाति वज्रमेव तत्सम्यक् संदधाति ॥ २ ॥

यत् येन त्रिवृत्त्रिणवाभ्यां स्तोमाभ्याम् एकविंशं विदधाति । तिसृभिः त्रिवृतो विधानम् । नवभिः त्रिणवस्येति ॥ २ ॥

वज्रस्य त्रिवृदादिसादृश्यं प्रशंसां च करोति––

एवमिव वै वज्रः साधुः । यदारम्भणतोऽणीयान् प्रहरणतः स्थवीयाँस्तेन पाप्मानं भ्रातृव्यं स्तृणुते । वसीयानात्मना भवति । य एतया स्तुते ॥ ३ ॥

एतया एकविंशस्तोमविष्टुत्या स्तुते । शिष्टं व्याख्यातचरम् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्याये अष्टमः खण्डः ॥ ८ ॥

---

6. J. subst. हिंकरोति सः for तिस्रो गातुं हिंकुर्यात् । सः हिंकर्ता.
7. JT add ऋग्भिः after पठिताभिः; J. गायेत् for कुर्यात्.
10. RI. उत्तमम् for उक्तम्.
15. M अपि for च.

## नवमः खण्डः

अथ त्रिणवस्य विष्टुतिविधायकं ब्राह्मणमेवमाम्नायते—

नवभ्यो हिंकरोति । स तिसृभिः स तिसृभिः स तिसृभिः । नवभ्यो हिंकरोति । स तिसृभिः स तिसृभिः स तिसृभिः । नवभ्यो हिंकरोति । स तिसृभिः स तिसृभिः स तिसृभिः । अभिचरन्स्तुवीत ॥ १ ॥

उद्गाता नवभ्यो नव ऋचो गातुं हिंकुर्यात् । स हिंकर्ता त्रीनपि पर्यायान् एकैकस्या ऋचस्त्रिरावृत्त्या तिसृभिः ऋग्भिः कुर्यादित्यर्थः । अनया त्रिणवस्तोमविष्टुत्या अभिचरन् स्तुवीतेति शेषः ॥ १ ॥

उक्तं त्रिणवं वज्रसादृश्येन प्रशंसति—

वज्रो वै त्रिणवः वज्रमेव तत्पराञ्चं प्रवर्तयति स्तृत्यै । तेन पाप्मानं भ्रातृव्यं स्तृणुते । वसीयानात्मना भवति य एतया स्तुते ॥ २ ॥

त्रिणव एव वज्रः । तिसृभिः त्रिवृद्भिः निष्पन्नत्वात् । त्रिवृतो वज्रत्वं प्रसिद्धम् । तत् तस्मात् वज्रमेव पराञ्चं परागञ्चनं प्रवर्तयति । भ्रातृव्यस्तृत्यै हिंसायै । ऋचामानुलोम्येन गीयमानत्वात् पराक्त्वमित्यर्थः । तेन पाप्मानं

---

6. MK. om. अभिचरन्स्तुवीत.

7. M. नवर्चे उद्गातुं for नव ऋचो गातुं.

9. I. विशेषः for शेषः.

14. J. त्रिणवत्वात् for त्रिवृद्भिः निष्पन्नत्वात्; J. subst. वज्र एव प्रसिद्धः for वज्रत्वं प्रसिद्धम्.

15. J. om. परागञ्चनं; J. om. भ्रातृव्यस्तृत्यै...हिनस्ति.

16. M. परार्थ०, RIS. पराङ्त्व० for पराक्त्व०

भ्रातृव्यं हिनस्ति । यः पुमानेतया त्रिणवविष्टुत्या स्तुते । आत्मनैव वसीयान् वसुमत्तमो भवतीति ॥ २ ॥

इति षड्विंशब्राह्मणे तृतीयाध्याये
नवमः खण्डः ॥ ९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीराजाधिराजराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

3. J. इति अभिचारार्थविष्टुतयः समाप्ताः ॥ for इति षड्विंश...खण्डः ॥

चतुर्थोऽध्यायः

# प्रथमः खण्डः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ चतुर्थाध्यायस्य प्रथमानुवाके पञ्चविंशब्राह्मणोक्ताद् द्वादशाहाद् विविक्तस्य व्यूढद्वादशाहस्य धर्मा निरूप्यन्ते । तत्र प्रथमम् आद्यन्तयोः प्रायणीयोदयनीययोरह्नोः सर्वयज्ञसाधारणत्वात् अवशिष्टानामह्नां मध्ये दशमस्याप्यतिक्रियत्वात् तत्रापि न किंचिद्वक्तव्यमस्तीत्यतोऽवशिष्टस्य नवरात्रस्यैवात्र भेदा अनुवर्ण्यन्ते ॥

तत्र प्रथमं प्रथमत्रिरात्रस्य धर्मविशेषमाह—

**स्वरान्तः प्रथमस्त्रिरात्रो गायत्री ॥ १ ॥**

प्रथमस्त्रिरात्रः स्वरान्तः स्वरितमक्षरम् अन्ते यस्य सः, तथोक्तः । त्रिरात्रसंबन्धी पवमानः स्वरान्त इति भावः । तथा च पञ्चविंशब्राह्मणे आर्भवपवमाने सामविध्यन्तरमाम्नायते—स्वारमु स्वरेण (तां.ब्रा. ११.५.२६) इति । तथा छन्दो गायत्री । तत्रत्यं छन्दो गायत्रीप्रमुखमित्यर्थः ॥ १ ॥

---

3. M. om. यस्य...महेश्वरम्.

5. J. om. अथ; M. om. चतुर्थाध्यायस्य प्रथमानुवाके; RIS. ०वाकेन for ०वाके; RJIS. ब्राह्मणोक्त० for ब्राह्मणोक्ताद्; M. ०हद्विविधोक्तस्य for ०हाद्विविक्तस्य.

8. RIS ०क्लृप्तत्वात्, MK ०क्रयत्वात् for ०क्रियत्वात्; JM. om. अतः; J. ०रात्रस्य धर्म०, MK. ०रात्रस्यैव न for ०रात्रस्यैवात्र; S ०रात्रभेदा for रात्रस्यैवात्र भेदा.

10. RJM. om. प्रथम०.

13. J ०संबन्धिनः, KSIT ०संबन्धः for ०संबन्धी; J. पवमानाः स्वरान्ताः for पवमानः स्वरान्तः.

14. K. अभ्यव० for आर्भव०; KJS ०मान for ०माने; MK. ०समा० for ०साम०; J. स्वारमुख्येन, MT· स्वरमुखरेण for स्वारमु स्वरेण.

15. RIS तत्र for तत्रत्यं.

प्रायशो गायत्रत्वात् प्रातःसवनस्य तदुभयं प्रशंसति—

**प्राणो वै गायत्री । प्रजापतिः स्वरः । प्रजापतिमेवाप्नोति ॥ २ ॥**

गायत्री प्राण एव । प्राणापानव्यानैः त्रिवृत्प्राणः । गायत्र्यपि त्रिपदा । अतो गायत्र्याः प्राणसाम्यम् । अथवा मुखे प्राणो गायत्र्यपि मुखादुत्पन्नेति प्राणसाम्यं द्रष्टव्यम् । तस्मात् तेन च्छन्दसा यजमानः सर्वमायुरेतीति शेषः । स्वरः प्रजापतिरेव । तयोस्तादात्म्यं शास्त्रसिद्धमेव । तेन स्वरेण देहान्ते यजमानः प्रजापतिमेवाप्नोति ॥ २ ॥

द्वितीयत्रिरात्रधर्ममाह—

**निधनान्तो द्वितीयस्त्रिष्टुप् ॥ ३ ॥**

द्वितीयः त्रिरात्रो निधनान्तः निधनम् अन्ते यस्य सः, तथोक्तः । द्वितीयाः पवमाना निधनान्ता इत्यर्थः । तथोक्तं पञ्चविंशब्राह्मणे—निधनान्ताः पवमाना भवन्ति (तां.ब्रा. १३.५.२८) इति । तथा त्रिष्टुप् तदीयच्छन्दोव्यूहेन त्रिष्टुप्प्रमुखम् ॥ ३ ॥

तदुभयं प्रशंसति—

**वीर्यं वै त्रिष्टुप् । त्रैष्टुभः पुरुषः [निधनम्] । पुरुषमेवाप्नोति ॥ ४ ॥**

त्रिष्टुब् वीर्यमेव । इन्द्रेण सहोत्पन्नत्वात् । पुरुषस्त्रैष्टुभः । चतुष्पाद्द्वयो वीर्यवत्तमत्वात् । निधनं निधानं तदास्थितः पुमान् । तेनाश्रयाश्रयिसंबन्धेन पुरुषशब्देन निधनं लक्ष्यते । तथा च निधनं त्रैष्टुभमित्यर्थः । तेन यजमानः पुरुषं पुत्रपौत्रादिकमेवाप्नोति ॥ ४ ॥

---

1. J. om. प्रायशो०.. प्रशंसति.
4. J प्राणो वै प्राण एव गायत्री for गायत्री प्राण एव.
6. RIS. om. यजमानः.
7. KMT ०विरुद्धम् for ०सिद्धम्.
13. J. जगती० for तदीय०.
14. MK. प्राङ्मुखम् for प्रमुखम्.
16. निधनं See CN.
19. MK. विर्य(M. वीर्ये) वर्तमान for वीर्यवत्तमत्वात्; J तदाश्रितः for तदास्थितः; MITSK श्रयाश्रायसंबन्धेन for ०श्रयाश्रयिसंबन्धेन.

तृतीयत्रिरात्रधर्ममाह—

**इडान्तस्तृतीयो जगती ॥ ५ ॥**

तृतीयस्त्रिरात्र इडान्तः इडा अन्ते यस्य सः, तथोक्तः । तदीयाः पवमाना इडान्ता इत्यर्थः । तथा चोक्तं पञ्चविंशब्राह्मणे—इडान्ताः पावमानाः भवन्ति (तां. ब्रा. १४. ५. ३१.) इति । जगती तदीयच्छन्दोव्यूहेन जगतीप्रमुखमित्यर्थः ॥ ५ ॥

तदुभयं प्रशंसति—

**पशवो वा इडा । पशवो जगती । जागताः पशवः । पशूनेवाप्नोति ॥ ६ ॥**

अतिरोहितार्थमेतत् ॥ ६ ॥

ननु यदि गायत्रः प्रथमस्त्रिरात्रः तर्हि प्रथमे विनियुक्ताया एव गायत्र्या द्वितीयतृतीययोरप्यह्नोः प्रयोगात् तस्य यातयामत्वं भवेदित्यत आह—

**प्रसृतच्छन्दाः प्रथमस्त्रिरात्रः । तेन सोऽयातयामा ॥ ७ ॥**

सत्यम् । तथापि प्रथमस्त्रिरात्रः प्रसृतच्छन्दाः प्रसृतानि विस्तीर्णानि गायत्र्यादीनि च्छन्दांसि यस्मिन्निति स तथोक्तः । प्रातःसवनस्य गायत्रत्वात् । माध्यंदिनसवनस्य त्रैष्टुभत्वात् । तृतीयसवनस्य जागतत्वाच्च । तेनैव च्छन्दोभेदेन सोऽयं त्रिरात्रोऽयातयामः । गतसारो न भवतीत्यर्थः ॥ ७ ॥

अथ द्वितीयत्रिरात्रस्य च्छन्दोविभागेनायातयामत्वं दर्शयति—

**अथोत्तरस्य च्छन्दांसि व्यूहन्ति । त्रिष्टुभः प्रतिपदो भवन्ति । त्रिष्टुभां लोके जगत्यो जगतीनां गायत्र्यस्तेन सोऽयातयामा ॥ ८ ॥**

अथशब्दो वाक्योपक्रमे । उत्तरस्य द्वितीयत्रिरात्रस्य च्छन्दांसि व्यूहन्ति । व्यूहेन विभिन्नानि कार्याणि कुर्युः । तस्यैव विवरणम् । त्रिष्टुभः

---

3. MTK अन्तो for अन्ते.

19. Sh Ms. जगत्यः प्रतिपदो भवन्ति । जगतीनां लोके त्रिष्टुभस्त्रिष्टुभां for त्रिष्टुभः...जगतीनां.

त्रिष्टुप्छन्दस्काः प्रतिपद्यन्ते प्रारभ्यन्ते आभिः ऋग्भिरिति प्रतिपद आद्या भवन्ति । तत्र बहिष्पवमानानाम् आज्यगणानां गायत्रीणां स्थाने त्रिष्टुभो भवन्तीत्यर्थः । त्रिष्टुभां लोके स्थाने माध्यंदिनपवमानान्तेषु जगत्यो भवन्ति । जगतीनां लोके आर्भवपवमानान्तेषु गायत्र्यो भवन्ति । तेनैव छन्दोव्यूहेन सोऽयं द्वितीयत्रिरात्रोऽयातयामा ॥ ८ ॥

अथ तृतीयत्रिरात्रस्यापि च्छन्दोव्यूहेनायातयामत्वं दर्शयति—

**अथोत्तमस्य च्छन्दांसि व्येवोहन्ति । जगत्यः प्रतिपदो भवन्ति । जगतीनां लोके त्रिष्टुभः । त्रिष्टुभां गायत्र्यः । तेनो एव सोऽयातयामा ॥ ९ ॥**

अथ उत्तमस्य तृतीयत्रिरात्रस्य च्छन्दांसि व्यूहन्त्येव । कथम् ? तत्र बहिष्पवमानाज्येषु जगत्यः प्रतिपदो भवन्ति । जगतीनां स्थाने त्रिष्टुभो भवन्ति । त्रिष्टुभां स्थाने गायत्र्यः तेनैव च सोऽयं तृतीयत्रिरात्रोऽयातयामा भवेदिति ॥ ९ ॥

यथोक्तमर्थं स्तौति—

**अपि वा एता अन्योन्यस्यै लोकमभ्यध्यायन् । काममेवैना गमयति । आप्नोति तं कामं यस्मै कामायैष आह्रियते ॥ १० ॥**

---

1. J. adds ऋचः before प्रति०; RISK. om. प्रारभ्यन्ते ; MTISK om. ऋग्भिः; J om. इति.

2. RIS अत्र for तत्र; J. आज्यानां च तद्गतानां for आज्यगणानाम्.

3. J. om. लोके; J. स्थानेषु for स्थाने.

4. TK. अजगतीनां for जगतीनां; J. स्थाने आर्भवान्ते for लोके आर्भवपवमानान्तेषु ; J adds इति after भवन्ति.

5. K. om. द्वितीयत्रिरात्रः.

6. KJT. व्यूहत्वेन for व्यूहेन.

7. Sh Ms. त्रिष्टुभः प्रतिपदो भवन्ति । त्रिष्टुभां लोके जगतीनां for जगत्य॰...॰त्रिष्टुभां.

10. M. adds एतत् before कथम्.

15. MJTRIS. अभि for अपि.

एता विभिन्नच्छन्दस्का ऋचः अन्योन्यस्यै लोकं व्यूहेन परस्परस्थानमभ्यध्यायन् । अधितिष्ठन्त्येव । एनाः विभक्तिपरिणामः । एताभिः परस्परं लोकं प्राप्ताभिः ऋग्भिः कामम् अभीष्टमेव यजमानो गमयति गच्छति । तस्यैव विवरणम् । यस्मै कामाय यं कामं प्राप्तुम् एष द्वादशाह आह्रियते अनुष्ठीयते तं काममाप्नोति ॥ १० ॥

अथ प्रथमत्रिरात्रस्य प्रसृतच्छन्दस्त्वं द्वितीयतृतीययोर्व्यूढच्छन्दस्त्वं च स्तौति—

**तस्माद्युजौ न सदृग्वहतस्तस्माद्विपरिणीतौ वहीयांसौ भवतस्तस्मादुभयतोदन्तः स्यदन्ते ॥ ११ ॥**

अतो यतो यज्ञात्मकस्य रथस्य वाहनस्थानीयानि गायत्र्यादीनि च्छन्दांसि वैषम्येण तं वहन्ति तस्माद्युजौ विषमबलौ गजाश्वावेकत्र युक्तौ सन्तौ सदृक् समानं न वहत इत्येतेन प्रथमे ऽह्नि सवनत्रयस्य यज्ञवहनद्वारा प्रसृतच्छन्दस्त्वं स्तुतं भवति । यस्माच्छन्दांसि अन्योऽन्यस्थानं प्राप्तान्येव यज्ञहारीणि वहन्ति । तस्माल्लोके विपरिणीतौ कालप्रभेदेन अन्योऽन्यस्थानं प्राप्तौ पूर्वाह्णे दक्षिणतो युक्तमनड्वाहं विमुच्य मध्याह्ने तत्स्थाने उत्तरतोऽवस्थिते युक्ते तत्स्थानेऽपि दक्षिणतः स्थिते युक्ते सति उभावपि वहीयांसौ वोढृतरौ

---

1 M. adds अपि वा after एता०; J विच्छिन्न० for विभिन्न०; M. adds एकैकस्य after अन्योन्यस्यै; M. adds अध्यायन् after लोकम्.

2. RI एनां विपरिमाण॰, KT एनामपि भक्तिपरिमाणः for एनाः विभक्तिपरिणामः.

6. MK. प्रथमस्य for प्रथम० ; J. om. द्वितीय...च्छन्दस्त्वं च; MTK व्यूह० for व्यूढ.

11. J. भवन्ति for तं वहन्ति.

12. J. अनेन for एतेन; J नवरात्रस्य for सवनत्रयस्य.

13. RIS. om. प्रसृत०...पूर्वाह्णे; K प्रसृतां M प्रसृत्वं for प्रसृत च्छन्दस्त्वं; KM. om. स्तुतं भवति । ...दक्षिणतो ; J. ०च्छन्दः for ०छन्दस्त्वम्.

15. RI प्रातः for दक्षिणतो०; S. om. दक्षिणतो०; S. प्रयुक्तं for युक्तं; I तत्तत् for तत् ; RI उत्तरा० for उत्तरतो०.

16. RI. om. अपि; RIK दक्षिण० for दक्षिणतः.

भवत इत्यनेनोत्तरयोस्त्रिरात्रयोश्छन्दसां व्यूहनं स्तुतं भवति। यस्मात् नवरात्रस्य च्छन्दांसि विलक्षणस्थानावस्थितानि तस्मादेव उभयतोदन्तोऽश्वादयः स्यदन्ते एकतोदद्भ्यो गवादिभ्योऽधिकं गच्छन्तीत्यनेन नवरात्रस्य च्छन्दसां स्थानवैषम्यं स्तुतं भवतीति वाक्यत्रयस्याप्यर्थवत्ता ॥ ११ ॥

इदानीं प्रकृतिभूते द्वादशाहे परीतो षिञ्चता सुतम् (सा. ५१२) अभिसोमास आयवः (सा. ५१८) इति साध्यासयोः प्रगाथयोः प्रगाथांशे प्रग्रथनेन तिसृष्वेकं साम गीयते। अध्यास्यायां द्विपदायामन्यत्। अत्र व्यूढद्वादशाहे विकृतिभूते न तथा। किं तु अध्यास्यायामयुक्ते चतुर्ऋचे एकमेव साम गेयमिति दर्शयितुमाह—

**तृचे वा अन्य ऋषयो विराजमपश्यन्। वसिष्ठश्च चतुर्ऋचे ॥ १२ ॥**

वसिष्ठाद् अन्ये ऋषयः तृचे ककुबुत्तरतया गीते प्रगाथे विराजम्। तत्राद्या बृहती चतुष्पदा। उत्तरे ककुभौ प्रत्येकं त्रिपदे। इत्यनेन प्रकारेणावाप्तदश-संख्यामपश्यन्। दशाक्षरा विराड् (श.ब्रा. १.१.२२.२; ए.ब्रा. ३.४१.४) इति श्रुतेः। वसिष्ठस्तु—साध्यासे चतुर्ऋचे प्रथमा बृहती षट्त्रिंशदक्षरा प्रग्रथनेन संपन्ना उत्तरास्तिस्त्रः ककुभः प्रत्येकमष्टाविंशत्यक्षरा इत्येवं विंशत्युत्तर-शतमक्षराणि भवन्ति। एवं च द्वादश विराजो भवन्तीत्यक्षर्यां हि विराजम् अपश्यत् ॥ १२ ॥

---

3. J after इत्यनेन adds: उत्तरयोस्त्रिरात्रयोश्छन्दसां व्यूहनं यस्मात्; J. ऋकुछन्दसो for छन्दसां.

6. J. साध्यास्ययोः for साध्यासयोः.

7. T. प्रग्रन्थनेन for प्रग्रथनेन; J. trans. अन्यद् befoe अध्यास्यायां.

8. J. अयुक्तं for अयुक्ते.

12. J. ककुबुत्तरपदतया अतीते for ककुबुत्तरतया गीते.

13. J. ऋचौ for ककुभौ; J पादाङ्गतो for (अ)वाप्त०.

14. MTK. ०संख्यायां पश्यन् for ०संख्यामपश्यन्.

15. MK. साध्यास्ये for साध्यासे; J. om. प्रथमा...अनेन (p.137.L.1)

16. M. om. संपन्ना...अनेन (p.137.L.1)

17. K. अक्षय्यां for अक्षर्यां.

18. KI. अपश्यन for अपश्यत्.

भवत्वेवम् । अनेन चतुर्ऋचे सामकरणं कथं सिध्यतीत्यत्राह—

**न तेन स चतुर्ऋचः । यत्तृचेऽन्यत् साम भवति एकर्चेऽन्यद्यद्वाव । चतसृष्वेकं साम स एव चतुर्ऋचः ॥ १३ ॥**

तृचेऽन्यत् साम एकर्चे एकस्यामृचि अन्यत् साम भवतीति यत् तेन स विवक्षितः चतुर्ऋचो न भवति । किंतु चतसृषु एव ऋक्षु एकं साम भवतीति यत् स एवात्र विवक्षितश्चतुर्ऋच इति ॥ १३ ॥

यदुक्तं चतुर्ऋचे साम गेयमिति तत् प्रशंसति—

**साम भूयांसं पोषं पुष्यति । तमनु पोषं पोषुको भवति ॥ १४ ॥**

तत्रैव गीयमानं साम भूयांसं पोषं महतीं पुष्टिं पुष्यति प्राप्नोति । तं साम्नः पोषमनु पश्चात् यजमानः पोषुकः पुष्टिमान् भवतीति ॥ १४ ॥

तदेतदसांप्रदायिकमित्याशङ्क्य श्रुतिः स्वयमेव पूर्वाचार्याणां संमतिं दर्शयति—

**एतद्ध स्माह मुञ्जः सामश्रवसः एतं ह वै वयं साम्नः पोषं विद्मेति तस्माद्वयमप्रतिगृह्णन्तो न सहस्रपोषाच्च्यवामहा इति ॥ १५ ॥**

सामश्रवसः सामश्रवाः कश्चिदृषिः तस्यापत्यं सामश्रवसो मुञ्जनामा श्रोत्रियः । एतद् वक्ष्यमाणम् आह स्म । तस्यैव प्रदर्शनम् । यच्चतुर्ऋचे साम

---

1. J. ०र्ऋचेन for ०र्ऋचे.
2. KM. om. सः.
5. J. किंच for किंतु; K. चतुर्षु for चतसृषु; KT एकं वर्क्षु एवं, M. एकमृक्षु एकं, J एकमेव एकं for एव ऋक्षु एकं.
8. TKM पोषकः for पोषुकः.
9. RIS. after भूयांसं add एव.
10. ISTKM पोषकः for पोषुकः.
13. RSh Ms. वयां for वयं.
14. MTS प्रति० for अप्रति०.
15. RSh Ms. ०मह इति for ०महा इति.

एतमेव साम्नः पोषं वयं विद्म जानीम इति यस्मात् तस्माद् वयमप्रतिगृह्णन्तः कुतोऽपि धनादिप्रतिग्रहनिरपेक्षाः सन्तः सहस्रपोषादपरिमितायाः पुष्टेर्न च्यवामहै न प्रच्युता भवेम। इतिशब्दो मुञ्जस्य वाक्यसमाप्तिद्योतनार्थः ॥

यथोक्तस्य दार्ढ्यार्थमाचार्यान्तरसंमतिं दर्शयति—

तदु ह स्माह वासिष्ठश्चैकितानेयः । साम ह वै नूनं भूयांसं पोषं पुष्यति । तमनुपोषं पोषुको भवति । विधवाया इव त्वे(इवेत्ये ?) वैतज्जन्म यदसाम्नी चतुर्थी । एवं ह वा एते विदुरिति । तस्मादेतेषां युवानः श्रोत्रियाः पुरायुषः प्रमायुका भवन्ति । युवतयो जाया विधवा भवन्ति इति । यत्तृचेऽन्यत्साम भवत्येकर्चेऽन्यद्यद्वाव चतसृष्वेकं साम स एव चतुर्ऋच इति । १६ ॥

वासिष्ठः वसिष्ठगोत्रोत्पन्नश्चैकितानेयो नामतस्तदेवाह स्म । कथम् ? । साम ह वै चतुर्ऋचे गीयमानं सामैव नूनम् अवश्यं भूयांसं पोषं पुष्यति । तं साम्नः पोषमनु यजमानोऽपि पोषुको भवति । किं च चतुर्थी अध्यास्या ऋक् असाम्नी तृचाश्रितसामरहितेति यत्, एतत् विधवाया गतभर्तृकाया जन्म

---

1. RI om· यस्मात ; TMISK प्रति० for अप्रति०.

2. R. गृह्णन्तोऽ० for ०गृह्णन्तः; J. कुतेऽपि for कुतोऽपि; M· परि० for प्रति०, J. ०ग्रहं for ०ग्रह०.

3. J. महे for ०महै ; RIS. मुञ्ज० for मुञ्जस्य.

4. J. मतं for संमतिं.

5. JT. हैव for ह वै.

7. MS. इह for इव.

12. T. ०नेयानामा अतः for ०नेयो नामतः; RIS नाम तस्य, M· नाम तन्मतं, for नामतः.

13. RKTIS. हैव for ह वै; J. क्रियमाणं for गीयमानं.

14. KMT. पोषको for पोषुको.

15. TMK. ऋचः for ऋक् ; J. असाम्नीति सा ऋक् for असाम्नी तृचाश्रित.

निरर्थकमिव इत्येवमेव एते चतुर्ऋचे साम गायन्तः श्रोत्रियाः विदुः जानन्ति इति । अपि च यस्माच्चतुर्थ्यां तृचानाश्रितं सामकरणं विधवाजन्मसदृशं तस्मात् एतेषां तृचे अन्यत् अध्यास्यायाम् अन्यत् साम कुर्वतां कुले श्रोत्रियाः श्रुताचारसंपन्नाः युवानश्च सन्तः शतसंवत्सरलक्षणात् आयुषः पुरा पूर्वमेव प्रमायुका मरणशीला भवन्ति । अत एव तेषां जाया युवतयः सत्यः विधवा भवन्ति । तत्रैव हेतुप्रदर्शनम् । यत् यस्मात् तृचेऽन्यत् साम एकर्चे अध्यास्यायामन्यद्भवतीति । अतो यदेव चतसृष्वृक्षु एकं साम क्रियते स एवात्र विवक्षितश्चतुर्ऋचः । इतिशब्दश्चैकितानेयवाक्यसमाप्त्यर्थः । एतत् चतुर्ऋचे सामगानं पृष्ठ्यषडहस्य तृतीये अह्नि छन्दोमानामह्नां मध्ये द्वयोरह्नोः माध्यंदिनपवमाने वेदितव्यम् ॥ १६ ॥

एवं चतुर्ऋचे साम विधाय इदानीमस्मिन्नेव द्वादशाहे सवनीया एकादशिन आग्नेयकृष्णग्रीवा इत्याद्याः पशवः प्रत्यहम् एकैकश आलभ्यन्ते । उत्तमेऽहनि एकः पशुः आलब्धव्यः । स कः सवनीय (किंसवनीय?) इत्यपेक्षायां विकल्पेनालभ्यं पशुं दर्शयितुं प्रथमं पक्षं तावदुपन्यस्यति —

**पशुरतिरिच्यते स ऐन्द्राग्न आलम्भ्यः ॥ १७ ॥**

उदयनीयेऽह्नि यः पशुरालम्भ्यत्वेनातिरिच्यते स ऐन्द्राग्न आलम्भ्यः । इन्द्राग्नी देवता यस्य तथोक्तः ॥ १७ ॥

---

1. M. एवेह त्वेवम् for इव इत्येवम्; MKT. ०र्ऋचः for ०र्ऋचे.
2. MK. चतुर्थांत्, T. चतुर्थ्या for चतुर्थ्यां; RSI. ०त्रित० for ०श्रितं.
4. MK. समन्तं, T. समन्तः for सन्तः; J. after सन्तः adds मानुषाः पुरुषाः; JMTK om. आयुषः.
5. M. प्रमायुकाः कामरूप, TK. प्रमायुकामरूप० for प्रमायुका मरण०. J. om. युवतयः.
7. M. चतुर्षु for चतसृषु.
9. RI om. अह्नां; J. मध्यान्तिमयो for मध्ये द्वयोः.
12. J. ऐका० for एका०; M. आग्नेयाः for आग्नेय०.
13. RT. शकः, K. शक्रः, J. स एकः for स कः
15. MS. आलभ्यः, KT. आलभ्यते for आलम्भ्यः.
16. R. अहनि, T. अन्वये for (अ) ह्नि; TK. ०लम्भ्यत्वेन J. ०लब्धत्वेन०, M. ०लम्भत्वेन for ०लम्भ्यत्वेन; MTS. आलभ्यः, K. आलभ्यते for आलम्भ्यः.

यथोक्तमर्थं प्रशंसति—

इन्द्राग्नी वै देवानामोजिष्ठौ ता उ अयातयामानौ तावेव तद्युनक्ति स्वर्गस्य लोकस्य समष्ट्यै ॥ १८ ॥

देवानां मध्ये इन्द्राग्नी एव ओजिष्ठौ ओजिस्वितरौ तावेवायातयामानौ अप्रतिहतसामर्थ्यौ तत् तस्मात् तावेव युनक्ति यागेन यजमानः स्वर्गस्य लोकस्य समष्ट्यै प्राप्त्यै ॥ १८ ॥

पक्षान्तरमाह—

सौर्यं ब्रह्मवर्चसकाम आलभेत ॥ १९ ॥

यो ब्रह्मवर्चसकामः स सौर्यं सूर्यदेवत्यं पशुमालभेत ॥ १९ ॥

तत्प्रशंसति—

एतस्यां वा एकादशिन्यामादित्याः सूर्यमजनयन् । स तेजो ब्रह्मवर्चसमवरुन्धते । ओजस्वी ब्रह्मवर्चसी भवति । य एवं वेद ॥ २० ॥

एतस्यां प्रसिद्धायां पशुसंबन्धिन्याम् एकादशिन्यामादित्याः सर्वे सूर्यमजनयन् उदपादयन् । स सूर्यः तस्यां तेजः प्रकाशं ब्रह्मवर्चसं चावरुन्ध[ते] अदधात् । अतो य एवं वेद स तेजस्वी ब्रह्मवर्चस्वी भवति ॥ २० ॥

कल्पान्तरं दर्शयति—

अथो खल्वाहुराग्नेय एवालभ्य इति । अग्निर्वै सर्वा देवतास्तेन न देवतानां कांचनान्तरेति ॥ २१ ॥

---

1. J. स्तौति for प्रशंसति.
4. RJ om. एव ; K. ओजस्विनौ for ओजस्वितरौ.
5. R. adds तावेव तद् युनक्ति before अप्रति०.
15. J. चावरुन्द्धत्य०, T. चावारुद्धत्य०, I. चावारन्ध० for चावरुन्धते

अथो अथवा ब्रह्मवादिन एवमाहुः । उदयनीयेऽह्नि आग्नेय अग्निदेवत्य एवालम्भ्यः खलु । यस्मादग्निर्वै अग्निरेव सर्वा देवताः । तत्प्रमुखत्वात् । तेन सर्वासां देवतानामन्तरा मध्ये कांचन अन्यां देवतां न कुर्यादिति शेषः । इतिशब्दः पक्षान्तराभावद्योतनार्थः । अत एवाह भगवानापस्तम्बः—आग्नेयमुदयनीय ऐन्द्राग्नं वा सौर्यं ब्रह्मवर्चसकामः (आ.श्रौ.सू. २१.१४.९-१०) इति ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये चतुर्थाध्याये प्रथमः खण्डः ॥ १ ॥

1. J. इदानीमन्त्ये० for उदयनीये.

2. KTS. ०लम्यः for ०लम्भ्यः ; RK add उत् (उ?) before खलु; M. सर्वदेवात्मकः for सर्वा देवताः.

# द्वितीयः खण्डः

इत ऊर्ध्वमनुवाकचतुष्टयेन श्येनादिनामकाश्चत्वार आभिचारयज्ञा विधीयन्ते । तत्र प्रथमं श्येनयागं त्रिधातुं प्रतिजानीते —

**अथैष श्येनः ॥ १ ॥**

अथ विकृतिभूतव्यूढद्वादशाहधर्मनिरूपणानन्तरं प्रसङ्गात् एष वक्ष्यमाणः श्येनः विकृतिभूतः श्येनाख्यो यागो निरूप्यते ॥ १ ॥

एवं प्रतिज्ञाय श्येनयागं विधत्ते—

**अभिचरन् यजेत ॥ २ ॥**

अभिचरन् भ्रातृव्यहिंसां कर्तुकाम एतेन श्येनेन यजेत श्येननामधेयेन यागेन भ्रातृव्यहिंसां भावयेदित्यर्थः । ननु भवेदेवं यदि श्येनशब्दः कर्मनामधेयं स्यात् । न त्वेवम् । पक्षिविशेषेऽत्यन्तरूढत्वात् । अतो ज्योतिष्टोमादौ गुणविधिः । यद्यपि तत्रोत्पत्तिशिष्टं सोमादिद्रव्यमस्ति, तथापि काम्यत्वाद् अनेन तस्य बाधः । गोदोहनेनेव चमसस्य । अथवा श्येनविशिष्टं कर्मान्तरमत्र विधीयते । श्येनवता यजतेति मत्वर्थलक्षणापि श्रेयसी । यद्यपि यथा श्येन आददीतेत्यादिवाक्यशेषप्रतिपादितसादृश्येन कर्मणि गौणी वृत्तिः श्येनशब्दस्य संभवति तथाप्यस्याः अत्यन्तविप्रकृष्टत्वात्

---

9. RMIS. om. अभिचरन ; J. om. कर्तुकाम...भ्रातृव्यहिंसां; M. तेन for एतेन; T. ०कामतोऽनेन for ०काम एतेन.

10. J. om. ननु...०त्ययमेवार्थः; (p. 143 L. 6); M. ०धेयः for ०धेयं.

11. T. विशेषणे, I. विशेष्ये for विशेषे; M. ०त्यन्तं निरूढत्वात् for ०त्यन्तरूढत्वात् K. ०निरुढत्वात् for ०रूढत्वात् .

12. T. द्रष्टव्यम् for ०द्रव्यम् .

13. RIS om. इव.

14. M. after यजतेति । adds. मत्वर्थलक्षणायाः प्रसिद्धत्वात् । कल्पना and T. मत्वर्थ लक्षणानप्रसिद्धकल्पन[...] ।

16. R. श्येनस्य for श्येनशब्दस्य ; T. तस्याः for तथाप्यस्या ; K. ०त्यन्तं प्रकृष्टत्वात् for ०त्यन्तविप्रकृष्टत्वात् .

स्वार्थपरित्यागेन श्रुतिर्बाधितव्येति च मत्वर्थलक्षणैव युक्ता । अतः सोमेन यजेतेतिव[त्स]त्यपि गौरवे गत्यभावाद्वि[शि]ष्टः विधिरेवेति । तदनुपपन्नम् । गुणविधिपरत्वे य एव गुणो विधीयते स एव स्तोतव्यः इति श्येनद्रव्य-विशेषस्यैव स्तुतिः स्यात् । न चात्र यथा श्येन आददीतेत्यादिवाक्यशेषे तस्य स्तुतिः । स्वेनैव स्वस्योपमानेन स्तुतेरयुक्तत्वात् । अतस्तद्व्यपदेशाद्वाक्यशेष-नैरर्थक्यपरिहाराय विप्रकृष्टार्थयापि गौण्या वृत्त्या श्येनशब्दः कर्मणि वर्तते । अतः स(ग?)तिसंभवे गौरवात् सोमादिवत् विशिष्टविध्यङ्गीकरणमयुक्तम् । इत्यलमतिप्रसङ्गेन । अतः श्येननामधेयेन यागेन शत्रुहिंसां भावयेदि-त्ययमेवार्थः ॥ २ ॥

श्येनशब्दस्य यागे प्रवृत्तिं दर्शयितुं प्रसिद्धश्येनसादृश्येन यागं स्तौति—

**श्येनो वै वयसां क्षेपिष्ठः । यथा श्येन आददीतैव-मेवैनमेतेनादत्ते ॥ ३ ॥**

वयसां पक्षिणां मध्ये श्येनो वै श्येनाख्यः पक्ष्येव क्षेपिष्ठः क्षिप्रतमः । किंच यथा श्येनो निपत्य पक्ष्यन्तराणि हन्तुमाददीत स्वीकरोति एवमेवा-भिचरन् एनं भ्रातृव्यम् एतेन यागेनादत्ते । यद्यप्यादाने यागस्य करणता प्रतीयते तथापि तदादानस्य हिंसार्थत्वात् भ्रातृव्यहिंसाकरणतैवात्र विधीयते ॥ ३ ॥

तत्र पवमानेषु सप्रशंसं त्रिवृत्स्तोमं विधत्ते—

**त्रिवृतः पवमाना भवन्ति ॥ ४ ॥**

तत् प्रशंसति—

**त्रिवृद्वै स्तोमानां क्षेपिष्ठः । यत्त्रिवृद्भवत्याशीय स्तृणवा इति ॥ ५ ॥**

---

4. R. नवा० for न चा०

11. M.adds ह before वै.

13. J. om. एव.

16. KTM. ०करणं तेनैव for ०करणतैव.

17. T. प्रशंसन् for सप्रशंसं; J. विधीयते for विधत्ते.

21. Sh KRIS. ०स्त्रिणवा० for ०स्तृणवा०.

यत् यस्मात् स्तोमानां मध्ये त्रिवृत् स्तोम एव क्षेपिष्ठः फलदाने क्षिप्रतमः तस्मादाशीयः आशुतरः स्तृणवै,—स्तृ हिंसायां—, भ्रातृव्यं हिनसानीति त्रिवृद् भवति । त्रिवृदेव स्तोमः कार्यः । पवमानादन्यः प्राकृतः पञ्चदशादिस्तोमः कार्य इत्यर्थः ॥ ५ ॥

प्रकृतौ विशेषान्तरं विधत्ते—

**रथौ हि हविर्धाने भवतः । रथवज्रमेवास्मै तत् प्रवर्तयति स्तृत्यै ॥ ६ ॥**

अत्रत्ये हविर्धाने रथौ भवतः । यथा प्रकृतौ हविर्धाने शकटाकारे, न तथा । किंतु रथाकारे कुर्यादित्यर्थः । तत् तथा सति अस्मै भ्रातृव्याय रथवज्रं चतुरङ्गे युद्धपरिकरे रथात्मकं हिंसासाधनमेव प्रवर्तयति । स्तृत्यै भ्रातृव्यस्य हननायेति ॥ ६ ॥

तत्र साम विधत्ते—

**वषट्कारणिधनं भवति ॥ ७ ॥**

पुनानः सोम धारय (सा. ५११) इत्येतस्यामृचि वषट्कारणिधनं साम कुर्यादित्यर्थः ॥ ७ ॥

तत्प्रशंसति—

**एष वै वज्राणामोजिष्ठो यत्साम वज्रः । यं बहवो वषट्कुर्वन्ति । तमेवास्मै वज्रं प्रहरति स्तृत्यै ॥ ८ ॥**

---

2. R. त्रि, I तृ for स्तृ.

3. RSK. हिंसाश्नीति for हिनसानीति; J. after भवति adds इति; M. after कार्यः adds एव; M. स्तोमानां for पवमानात् ; K. प्रकृतः for प्राकृतः.

5. RIS. प्रकृतेः for प्रकृतौ.

9. J om. अर्थः । तत्; M. वज्रे, K. रथवज्रे for रथवज्रं.

10. J. चतुरं, K. च तुरगे, T. चरतु । रङ्गे for चतुरङ्गे.

12. M. after साम adds ब्रह्म.

वज्राणां हिंसासाधनानां मध्ये एष वै अयमेव ओजिष्ठः ओजस्वितमः यत् यः सामात्मको वज्रः । किं च यं वषट्कारं बह्वो होत्रादयो वषट्कुर्वन्ति प्रयुञ्जते । सर्वे निधनमुपयन्ति (द्रा. श्रौ. सु. २. २. १०?) इति वचनात् । सोऽपि [तमेव] वज्रमेव उभयात्मकं वज्रमस्मै भ्रातृव्याय प्रहरति । साम्ना वषट्कारणिधनेनेति शेषः । स्तृत्यै भ्रातृव्यहननायेति ॥ ८ ॥

सप्रशंसं विशेषान्तरमाह—

**उभे बृहद्रथन्तरे भवतः उभाभ्यामेवास्मै बृहद्रथन्तराभ्यां वज्रं प्रहरति स्तृत्यै ॥ ९ ॥**

ब्रह्मसाम बृहत् । रथन्तरं होतुः पृष्ठम् । ते उभे अपि अत्र भवतः । ताभ्याम् उभाभ्यां बृहद्रथन्तराभ्याम् एव अस्मै वज्रं हिंसासाधनं प्रहरति स्तृत्यै तस्येति ॥ ९ ॥

उक्ते बृहद्रथन्तरे पराचीष्वेव कुर्यादिति नियमयति—

**पराचीषु रथन्तरं भवति ॥ १० ॥**

यथा पृष्ठस्थाने रथन्तरं क्रियते तथा पृष्ठानां त्रिकत्वात् पराचीष्वनभ्यस्तासु तिसृषु ऋक्षु रथन्तरं भवति । एतद् बृहतोऽप्युपलक्षणम् । बृहदपि पराचीष्वेव कुर्यादित्यर्थः ॥ १० ॥

अथोक्तार्थं प्रशंसति—

**पराञ्चमेवास्मै वज्रं प्रहरति स्तृत्यै ॥ ११ ॥**

तथा सति अस्मै भ्रातृव्याय पराञ्चम् अनावृत्तं वज्रमेव प्रहरति तस्य स्तृत्यै ॥ ११ ॥

विशेषमाह—

---

2. J. अयं for यत् यः; M om. यत्.

5. R. स्मृत्या इति for साम्ना; KM. om. साम्ना...शेषः.

12. MK. निधनमिति for नियमयति.

14. R before यथा adds: यदा पृष्ठस्थाने रथन्तरं भवतीति; RJIS यदा for यथा; RJIS तदा for तथा.

15. RIS om. तिसृषु; R त्रिषु for तिसृषु; J ग्रहणं for बृहतोऽपि.

16. RIS after कुर्यादित्यर्थः adds:—एतत् त्रिवृतः परिवर्तन्यपेक्षया उक्तमाचार्यैः वस्तुतः पराचीष्वेवाध्ययनादित्यपि द्रष्टव्यम् ।

21. MTISK om. विशेषमाह...बृहत् कुर्यात्. (p. 146 L. 3)

तस्य रथन्तरं पृष्ठम् । बृहत् ब्रह्मसाम । एष वै साम वज्रः । तमेवास्मै वज्रं प्रहरति स्तृत्यै ॥ १२ ॥

होतुः पृष्ठं रथन्तरं कुर्यात् । ब्रह्मसाम बृहत् कुर्यात् ॥ १२ ॥

एवं भ्रातृव्यहिंसाकामस्य होतुः पृष्ठं रथन्तरं, ब्रह्मसाम बृहदिति दर्शयित्वा इदानीं जीवत एव भ्रातृव्यस्य पश्वादिराहित्यम् इच्छतो यजमानस्य प्रयोगविशेषं दर्शयति—

यं कामयेत क्षीयेतेति तस्य बृहत् पृष्ठं कुर्यात् । रथन्तरं ब्रह्मसाम । क्षत्रं वै बृहत् । पशवो रथन्तरम् । क्षत्रेणैवास्य पशून् हन्ति । अपशुर्भवति क्षीयते ॥ १३ ॥

यं भ्रातृव्यं जीवन्तं क्षीयेत पश्वादिभिर्हीयेतेति यो यजमानः कामयेत तस्य होतुः पृष्ठं बृहत् कुर्यात् । ब्रह्मसाम रथन्तरम् । यतः क्षत्रं वीर्यमेव बृहत् । प्रवृद्धत्वात् । पशव एव रथन्तरम् । कार्यकारणभावात् । तस्मात् क्षत्रेणैवास्य भ्रातृव्यस्य पशून् हन्ति । तथा सति भ्रातृव्योऽपशुः पशुरहितो भवति । अतः क्षीयते अपक्षयं प्राप्नोति ॥ १३ ॥

अथ जीवत एव भ्रातृव्यस्य अप्रतिष्ठाकामस्य यजमानस्य प्रयोगविशेषं विधत्ते—

यं कामयेत परां परावतमियान्न प्रतितिष्ठेदिति पवमाने रथन्तरं कुर्यात् । बृहत् पृष्ठम् । प्लवं ब्रह्मसाम । बृहद्रथन्तराभ्यामेवैनमेभ्यो लोकेभ्य उद्धृत्य प्लवेन प्रप्लावयति । परां परावतमेति । न प्रतितिष्ठति ॥ १४ ॥

---

3. R om. होतुः...बृहत् कुर्यात्.
5. M. रहितस्य, T. राहित्यस्य for राहित्यम्.
6. J. प्रयोगं for प्रयोगविशेषं.
7. M. यः for यं; J. जीयेतेति for क्षीयेतेति ; RISK om. तस्य.
9. JR. जीयते for क्षीयते.
10. J. जीयेत for क्षीयेते.
12. R. वृद्धत्वात्, J. बृहत्त्वात् for प्रवृद्धत्वात्.
14. RSI. ०हीनो० for ०रहितो०.
15. J. प्रयोगं for प्रयोगविशेषं.

यं भ्रातृव्यं परां परावतमतिदूरम् इयात् गच्छेत् न क्वापि प्रतितिष्ठेदिति यो यजमानः कामयेत तस्य पवमाने रथन्तरं कुर्यात् । तदेतदाह द्राह्यायणः—पवमाने रथन्तरं कुर्यादिति बृहत्यां एकर्चानां स्थाने स्यात् । तद्धि बार्हतानां स्थानम् (     ) इति । अस्यार्थः—श्येनकल्पे ये बृहत्यामेकर्चाः रौरवमेकस्यां यौधाजयमेकस्यां वषट्कारणिधनमेकस्याम् (म. सू. ३.७) इति तेषां स्थाने रथन्तरं कार्यम् । तद्धि बार्हतानां साम्नां स्थानम् । रथन्तरं च बृहत्यामुत्पन्नमिति । तथा पृष्ठं बृहत् कुर्यात् । ब्रह्मसाम प्लवं साम कुर्यात् । ततश्च एनं भ्रातृव्यं बृहद्रथन्तराभ्यामेव एभ्यो लोकेभ्य उद्धृत्य प्लवेन साम्ना प्रप्लावयति गमयति अप्रतिष्ठं कुर्यादित्यर्थः । सोऽपि परां परावतम् अतिदूरमेति गच्छति न क्वचित् प्रतितिष्ठति ॥ १४ ॥

पुनर्भ्रातृव्यस्य हिंसाकामस्यैव प्रयोगविशेषं दर्शयति—

**वार्षाहरे पवमानमुखे भवतः । सफौपगवे नानदं क्रूराणि सामानि संभरन्ति स्तृत्यै ॥ १५ ॥**

पवमानमुखे उक्तयोः माध्यंदिनार्भवयोः पवमानयोः मुखे वार्षाहरे एतन्नामधेये सामनी भवतः । गायत्रसाम्न ऊर्ध्वं वार्षाहरयोः साम्नोः निवेशः सर्वत्र । गायत्रस्याप्रच्युतत्वात् । तथा माध्यंदिनपवमाने अर्षा सोम द्युमत्तम

---

1. MTIK. इति for अति.
2. RISM. स्यात् for तस्य; RMISR om. पवमाने...कुर्यात्.
3. TK. एकार्थानां for एकर्चानाम्.
5. RIS om. ये; MK. ०कर्चे for ०कर्चाः ; J. before वषट्कार० adds: कल्पकारेण क्लप्ताः पुनानः सोम धारयेति.
6. J. trans. रौरवमेकस्यां यौधाजयमेकस्यां after ०णिधनमेकस्याम्.
7. J M. स्थाने for स्थानम ; R om. बृहत्.
8. RI after साम कुर्यात् adds इति.
9. KIS. ०तिष्ठितं for ०तिष्ठं.
10. RIS om. अति०.
14. MTIK. संभवन्ति for संभरन्ति.
15. MRISK om. पवमानमुखे; RIS om. पवमानयोः; M om. उक्तयोः माध्यंदिन.
16. M after ०धेये adds सामधेये; JMTK om. निवेशः.
17. KT सर्वक्रुत्वात् , M. सर्वत्र क्रुतत्वात् for सर्वत्र ; KMT. प्रच्युतत्वात् for गायत्रस्याप्रच्युतत्वात्.

(सा. ५०३) इति एकस्यां गायत्रं परस्यां वार्षाहरम् । आर्भवपवमाने यस्ते मदो वरेण्यः (सा. ४७०) इति गायत्रवार्षाहरे एकस्यामेवेति कल्पकारवचनान्निश्चीयते । तथा सफौपगवे सामनी पवस्व (सा. ४७९) इन्द्रमच्छा (सा. ५६६) इत्यनयोः ऋचोः; नानदं—पुरोजिती वो अन्धसः (सा. ५४५) इत्यस्याम् ऋचीति क्रूराणि शत्रुहिंसाकारीणि सामानि संभरन्ति उद्गातारः संपादयन्ति । स्तृत्यै भ्रातृव्यस्येति ॥ १५ ॥

अथानुवाकशेषे यूपादीनां श्येनयागे प्राकृतेभ्यो विकारा अभिधीयन्ते । तत्र यूपस्य विकारं प्रथमं दर्शयति—

**तैल्वको वा बाधको वा यूपः स्फ्याग्रः ॥ १६ ॥**

तिल्वको नामाग्रक्षीरः कश्चिद् वृक्षविशेषः तद्विकारो वा, बाधको नाम राजवृक्षः तद्विकारो वा यूपः कर्तव्यः । तत्रापि स्फ्याग्रः स्फ्यः, वेद्युद्धननसाधनं यज्ञायुधं, तदाकाराग्रं स्फ्याग्रसदृशं[स]चषालं यूपं कुर्यादिति । अत्र सूत्रम्—यूपः स्फ्याग्र इत्य(इव वा-?)चषालः स्यात् । (ला. सू. ८. ५. ७.) इति ॥ १६ ॥

अधिषवणफलकयोर्विकारं दर्शयति—

**शवनभ्ये अधिषवणे ॥ १७ ॥**

येन शकटेन शवं निनयन्ति तस्य चक्रयोः मध्यमे ये फलके ते शवनभ्ये नाभौ [तत्र]भव (पा. ४. ३. ५३) इति यत्प्रत्ययः नाभिशब्दस्य नभादेशश्च । ते एवाधिषवणफलके कुर्यात् । तथा च द्राह्यायणः—येन यानेन मृतं निर्हरेयुस्तस्य नभ्ये अधिषवणफलके कुर्युः (?) इति ॥ १७ ॥

---

1&2. RIS. एतस्यां for एकस्यां

1. RIS. आर्भवे च पवमाने for आर्भवपवमाने; J after ०माने adds उ

3. TKS. साम्नी for सामनी ; T after साम्नी adds एव.

5. RS. ०कराणि, J. ०कारणानि for ०कारीणि; J. ०हिंसकानि for हिंसाकारीणि.

6. R. भवन्ति, K. संभावयन्ति, M. संभवन्ति for संभरन्ति.

8. JT trans. प्रथमं after तत्र.

10. M. क्षीरकः for ०ग्रक्षीरः.

13. J. तथा च द्राह्यायणः for अत्र सूत्रं; MTK om. अत्र सूत्रम्.

17. RMTIS. शवन्ति for शवं निनयन्ति; J. नयन्ति for निनयन्ति.

18. RI. भवे TK. भवेति for भवः; RI om. इति; J. नाभिनभश्चेति for नाभौ [तत्र] भव इति.

सवनीयपशौ विशेषं दर्शयति—

**अग्नये रुद्रवते लोहितः ॥ १८ ॥**

यो ह्यग्नये रुद्रवते सवनीयः पशुः स लोहितवर्णो भवेत् ॥ १८ ॥

उपांश्वन्तर्यामग्रहयोः सादने विशेषं दर्शयति—

**सादयन्त्युपांश्वन्तर्यामौ ॥ १९ ॥**

उपांश्वन्तर्यामाख्यौ ग्रहौ प्रकृतौ होमादनन्तरं सादयन्ति । अत्र तु न तथा । किं तु होमात् पूर्वं सोमग्रहणानन्तरं सादयन्ति सादनं कुर्युः ॥ १९ ॥

बर्हिर्विशेषं दर्शयति—

**शरमयं बर्हिः शीर्त्यै ॥ २० ॥**

शरः सुषिरदण्डः गुल्मविशेषः तन्मयं बर्हिः कार्यम् । शीर्त्यै भ्रातृव्यहिंसार्थम् । शीर्त्या इति शरस्तुतिः । उभयोरपि श्रृणातेर्निष्पन्नत्वेन शब्दसामान्यम् ॥ २० ॥

इध्मविशेषं दर्शयति—

**वैभीतक इध्मो विभीत्यै ॥ २१ ॥**

विभीतकोऽक्षदारुः तद्विकारो वैभीतकः स इध्मः कार्यः विभीत्यै भ्रातृव्यस्य । अत्रापि शब्दसामान्यात् विभीतकस्तुतिः ॥ २१ ॥

ऋत्विक्षु धर्मविशेषमाह—

**लोहितोष्णीषा लोहितवाससो निवीता ऋत्विजः प्रचरन्ति स्तृत्यै ॥ २२ ॥**

येऽत्र ऋत्विजः ते लोहितोष्णीषा लोहितवर्णमुष्णीषं शिरोवेष्टनं येषां ते तथोक्ताः । तथा लोहितवाससः लोहितं वासः परिधानीयमुत्तरीयं च येषां

11. J. असुर०, M. शर० for सुषिर०.
12. RISK. इति च for स्तुतिः ; MTIK. श्रृणोतेर् for श्रृणातेर्.
13. J. ०सामान्यात् for सामान्यम्.
15. M. विधृत्यै for विभीत्यै.
22. J. लोहितवर्णानि for लोहितं वासः.

ते तथोक्ताः । तथा निवीताः कर्णलम्बितब्रह्मसूत्रोत्तरीयाः सन्तः प्रचरन्ति कर्मानुतिष्ठेयुरित्यर्थः । स्तृत्यै भ्रातृव्यस्येति ॥ २२ ॥

ऋत्विग्दक्षिणायां विशेषमाह—

**नवनव दक्षिणा भवन्ति ॥ २३ ॥**

नवनवेति वीप्सा । एकैकस्मै ऋत्विजे नववर्गाः दक्षिणा भवन्ति । तथा च द्राह्यायणः—नवनव दक्षिणा इति नववर्गान् यथोत्साहं दद्यात् काणखोरकूटपाण्डानाम् इति । अस्यार्थः—नवकाणान् स एको वर्गः । नवखोरान् स एको वर्गः । नवकूटान् सोऽप्येकः । नवपाण्डान् स एकः । इत्येतान् वर्गान् यथोत्साहं दद्यादिति ॥ २३ ॥

तत् प्रशंसति—

**नावयन्त्येवैनं तत् ॥ २४ ॥**

तत् तेन यथोक्तदक्षिणादानेन एनं भ्रातृव्यं नावयन्ति शरीरान्तर-प्रापणेन नूतनं कुर्वन्त्येवेत्यर्थः । श्येनप्रयोगं सविशेषं कल्पसूत्रकारो दर्शयामास—पवमानस्य जिघ्नतः (सा. १२१०), पुनानो अक्रमीद-भि (सा. ४८८), पवमानस्य ते कवे (सा. ६५७), अग्निर्मूर्धा (सा. २७), अग्निर्वृत्राणि जङ्घनत् (सा, ४), मित्रं हुवे पूतदक्षम् (सा. ८४७), उ त्वा मन्दन्तु सोमाः (सा. १९४) ता हुवे ययोरिदम् (सा. ८५३), अर्षा सोम द्युमत्तमः (सा. ५०३) इति गायत्रमेकस्यां वार्षाहरमेकस्यां शाक्करवर्णमेकस्याम् । पुनानः सोम धारया (सा. ५११) इति वषट्कार-णिधनमेकस्याम्, रौरवमेकस्यां यौधाजयमेकस्याम्, औशनमन्त्यं, रथन्तरं च वामदेव्यं च बृहच्च कालेयं च । यस्ते मदो वरेण्यः (सा. ४७०) इति गायत्रवार्षाहरे । पवस्व (सा. ५७८) इन्द्रमच्छ (सा. ५६६) इति सफौपगवे । पुरोजिती वो अन्धसः (सा. ५४५) इति नानदान्धीगवे ।

---

5. J om. नव०...द्राह्यायणः.

7. TM. काणात् for काणान्.

8. MT. ०खोरात् for खोरान; MT. कूटात् for कूटान्, MT. for पण्डात् for पाण्डान्.

12. RISK om. यथोक्त.

13. M. नवीनं for नूतनं.

कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम त्रिवृतः पवमाना अग्निष्टोमसाम च तिसृभिः तिसृभिः आज्यपृष्ठानि (म. सू. २. ७) इति । अस्यायमर्थः— तिसृभिराज्यानि पृष्ठानीति ॥ २४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये चतुर्थाध्याये द्वितीयः खण्डः ॥ २ ॥

---

2. JS om. तिसृभिः ; MTK. चतसृभिः तिसृभिः for तिसृभिः तिसृभिः IK. has only चतसृभिः.

3. MTSK. चतसृभिर् for तिसृभिर् ; J om. पृष्ठानि; MKS after आज्यानि add चतसृभिः and TI. तिसृभिः

# तृतीयः खण्डः

एवं श्येनयागं सविशेषं प्रतिपाद्येदानीं त्रिवृदग्निष्टोमं निरूपयितुं प्रतिजानीते—

**त्रिवृदग्निष्टोमः ॥ १ ॥**

उच्यत इति शेषः ॥ १ ॥

इदानीं विधत्ते—

**तस्येषुं विष्टुतिं कृत्वाभिचरन् यजेत ॥ २ ॥**

तस्य त्रिवृदग्निष्टोमस्य इषुम् इषुसंज्ञकां विष्टुतिं कृत्वाभिचरन् भ्रातृव्यं जिघांसुस्तेन यजेत । द्वे इषुसंज्ञके विष्टुती प्राक् प्रदर्शिते । अत्र विशेषाश्रवणात् तयोरन्यतरा ग्राह्या ॥ २ ॥

यथोक्तं प्रशंसति—

**इषुवधो वै पुरायुषो हन्ति । यदिषुं विष्टुतिं करोति पुरैवैनमायुषः प्रवृश्चति ॥ ३ ॥**

इषुवधः इष्वाख्यं हननसाधनम् आयुधम् आयुषः शतवर्षलक्षणात् पुरा पुरस्तादेव हन्ति । तस्मात् यदिषुम् इष्वाख्यां विष्टुतिम् अत्र करोति कुर्यात् तर्हि एनं भ्रातृव्यमायुषः पुरैव प्रवृश्चति यथा विष्टुत्या प्रकर्षेण छिनत्ति ॥ ३ ॥

---

2. T. ०यागस्य for यागं स०; T. अग्नीषोमं for अग्निष्टोमं.
7. M. यजते for यजेत.
12. SIK. भवति for हन्ति.
14. RKMSI om. आयुधम्.
15. RKIS. भवति for हन्ति.
16. J. तया for यथा.

त्रिवृत्स्तोमं सप्रशंसं विधत्ते—

**त्रिवृद्वै स्तोमानां क्षेपिष्ठो यत्त्रिवृद्भवत्याशीयस्तृणवै ॥ ४ ॥**

यत् यस्मात् स्तोमानां मध्ये त्रिवृत् स्तोम एव क्षेपिष्ठः अत आशीयः आशुतरं भ्रातृव्यं स्तृणवै हिंसानीति। तत्र त्रिवृदेव स्तोमो भवति नान्य इत्यर्थः ॥ ४ ॥

सामविशेषं दर्शयति—

**वषट्कारणिधनं भवति ॥ ५ ॥**

व्याख्यातचरम्। यद्यपि समानमितरच्छ्येनेनेत्यनेनैव वषट्कारणिधनं सिद्धं, तथापि तद्वचनं पवमाने रथन्तरं कुर्यात् बृहत्पृष्ठं प्लवं ब्रह्मसाम (ष. वि. ब्रा. ४.२.१४) इति विहितस्य धर्मविशेषस्याप्राप्त्यर्थम् ॥ ५ ॥

स्तोत्रविकारं सप्रशंसं विधत्ते—

**सप्तहं भवति। आसप्तमात् पुरुषादनायतनो भवति। यमेतेनाभिचरन्ति ॥ ६ ॥**

त्वामिद्धि हवामहे (सा. २३४) इत्यस्यामृचि सप्तहं सप्तहनामकं साम भवति पृष्ठस्य। तेन साम्ना आसप्तमात् पुरुषात्। अभिविधावाङ्। सप्तपुरुषपर्यन्तं सोऽनायतनो भवति अप्रतिष्ठितो भवति। यं भ्रातृव्यमेतेन यागेनाभिचरन्ति। अनेनास्य साम्नः सप्तहनामकत्वं प्रदर्शितं भवति। सप्तपुरुषहननसाधनत्वप्रतिपादनात्। यद्वा तस्य त्वामिद्धि हवामहे (सा. २३४) इत्यस्यां गानेन सप्तहकारसंपत्तेः सप्तहनामकत्वं द्रष्टव्यम् ॥ ६ ॥

एवं विशेषधर्मानुक्त्वा इदानीं श्येनवैशेषिकधर्मानतिदिशति—

**समानमितरच्छ्येनेन ॥ ७ ॥**

---

1. JT. before त्रिवृत् add तत्.
4. RJKS. om. यत्; M. after क्षेपिष्ठः adds: क्षिप्रकारी.
9. M. यस्मात् for अपि.
19. MKR. om. तस्य.

ये श्येनयागे वैशेषिका लोहितोष्णीषत्वादयो धर्मा विहितास्ते सर्वेऽप्यत्र कर्तव्या इत्यर्थः । ननु इतरच्छब्दस्य संनिहितवाचकत्वेन श्येनवैशेषिकधर्माणां चासंनिहितत्वेन तद्वाचकत्वमयुक्तम् । किं तु अतिदेशतः प्राप्ता ये ज्योतिष्टोमधर्मास्ते श्येनेऽपि विद्यमानाः तत्सादृश्यमुत्पादयन्तीति तदनुवादो युक्त इति चेत् । सत्यम् । इतरच्छब्दः, संनिहितपरः न तु तन्मात्रपरः । अपि तु यत् पूर्वोक्तसदृशं संनिहितं च तदेवेतरच्छब्द आचष्टे । तथा च सति इह यच्चोदकप्राप्तज्यौतिष्टोमिकधर्मजातमासन्नं न तत् सर्वं पूर्वनिर्दिष्टसप्तहादिधर्मसदृशम् ये चाप्राकृता लोहितोष्णीषत्वादयः श्येनवैशेषिकाः वैशेषिकधर्मत्वेन सदृशास्ते न संनिहिताः । तत्र सादृश्यसंनिहितत्वयोरुभयोरेकस्मिन् अवश्यपरित्यक्तव्ये सति वचननैरर्थक्यपरिहाराय संनिहितमपि ज्यौतिष्टोमिकं धर्मजातं परित्यज्य सादृश्यमादाय श्येनवैशेषिकाणामेव लोहितोष्णीषत्वादीनामभिधानमिति युक्तमुत्पश्यामः ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये चतुर्थाध्याये तृतीयः खण्डः ॥ ३ ॥

---

1. RI om. ये; RI om. विहिताः.
2. JT. कार्या० for कर्तव्या०.
4. J. अत्रा०, M. इत्या०, R. प्रीत० for उत्०.
5. JT after चेत् add न.
6. J. पूर्वोक्तं for पूर्वोक्त०; MK. सादृश्यं for सदृशं.
7. RJI. ०प्राप्तं for ०प्राप्त०; RJTMK. ज्योति० for ज्यौति K. ०ष्टौमिक० for ०ष्टोमिक०; JRIK. om. सर्वं; J. पूर्वं for पूर्व०; JM. निर्दिष्टं for निर्दिष्ट०.
9. J. om. संनिहिताः...परिहाराय; RI om. उभयोर्.
10. RJTMK. ज्योति० for ज्यौति०; K. ०ष्टौमिकं for ०ष्टोमिकं.
12. J. उद्दिश्यामः, K. पश्यामः for उत्पश्यामः.

## चतुर्थः खण्डः

अथ संदंशाख्यं यागं प्रतिजानीते—

**अथैष संदंशः ॥ १ ॥**

अथ अनन्तरमेष वक्ष्यमाणः संदंशः दुरादानग्रहणसाधनत्वेन संदंशसाम्यात् संदंशाख्यो यज्ञः । उच्यत इति शेषः ॥ १ ॥

तं विधत्ते—

**अभिचरन् यजेत ॥ २ ॥**

तेन संदंशयागेन अभिचरन् भ्रातृव्यजिघांसुर्यजेत ॥ २ ॥

यस्मादश्यादयं क्रतुः संदंशः तेन किं क्रियत इत्यत्राह—

**यद्वै दुरादानं संदंशेन तदादत्ते ॥ ३ ॥**

यद् दुरादानं तप्तायःपिण्डादि तत् संदंशेनादत्ते कर्मारः ॥ ३ ॥

किमत्र संदंशसाम्यं कथं च तत् संदंशवदनेन क्रियत इत्यत्राह—

**यद् द्वौ द्वौ स्तोमौ सह यथा ह दुरादानं संदंशेनानुहायाददीतैवमेवैनमेतेनादत्ते ॥ ४ ॥**

द्वे त्रिवृती स्तोत्रे द्वे द्वादशे द्वे पञ्चदशे द्वे एकविंशे द्वे चतुर्विंशे द्वे त्रिणवे इत्येवं द्वौ द्वौ स्तोमौ समानौ यत् सह भवतः । तेनायं क्रतुः संदंशसदृशः, ततश्च यथा ह यथा खलु दुरादानमादातुमशक्यं तप्तायःपिण्डादि संदंशेनानुहाय प्रापय्य आददीत एवमेवैनं भ्रातृव्यम् एतेन यागेन आदत्ते ॥ ४ ॥

---

2. KMI. ०जानीतुमुप जानीते for ०जानीते.
4. J. आदान, KT. उदान, M. इदानीं for दुरादान०.
8. J om. भ्रातृव्य०.
11. J. लोहकारः, M. कर्मणः, IR. कर्मकरः for कर्मारः.
12. J. सादृश्यं, M. साम्यात् for साम्यं; M. संदंशेन for संदंश०.

अस्मिन् यागे सर्वेषां स्तोमानां त्रिवृत्स्तोमसंपत्तिं तदीयानां स्तोत्रीयाणां बृहतीसंपत्तिं चानूद्य प्रशंसति—

**त्रिवृतं स्तोमं संपद्यते। बृहतीछन्दः। वज्रो वै त्रिवृत्। पशवो बृहती। वज्रेणैवास्य पशून् हन्ति। अपशुर्भवति ॥ ५ ॥**

अत्र स्तोमगणः त्रिवृतं स्तोमं संपद्यते। स्तोत्रीयाणां च गणो बृहतीछन्दः संपद्यते। तत्र त्रिवृद्वज्रो वै वज्र एव। बृहती पशवः। तेन अस्य भ्रातृव्यस्य पशून् वज्रेणैव हन्ति। तथा सति भ्रातृव्योऽपशुर्भवतीति। तत् त्रिवृतः संपत्तिरेवं द्वे त्रिवृती स्तोत्रे इत्यादिना प्रदर्शितानां स्तोमानां त्रिवृतोस्त्रिणवयोश्चाष्टौ त्रिवृत इति त्रिवृत्संपत्तिः सिद्धत्वान्न वक्तव्या। द्वाभ्यां द्वादशाभ्यां द्वाभ्यां पञ्चदशाभ्यां चतुःपञ्चाशदित्यतः षट् त्रिवृतः संपद्यन्ते। द्वाभ्याम् एकविंशाभ्यां द्वाभ्यां चतुर्विंशाभ्यां नवतिरित्यतो दश त्रिवृतः संपद्यन्त इति। बृहतीसंपत्तिर्विंशतिसंख्याभिस्त्रिवृद्भिः स्तोत्रीयाणां षोडशोत्तरशतद्वयेन षट् बृहत्यः संपद्यन्त इति ॥ ५ ॥

स्तोत्रविकारं सप्रशंसं विधत्ते—

**वैयश्वं भवति व्यश्वमेवैनं करोति ॥ ६ ॥**

पुनानः सोम धारया (सा. ५११) इत्येतस्यामृचि वैयश्वम्, व्यश्वः कश्चिदृषिः, तेन दृष्टं साम वैयश्वं, भवति भवेत्। तेन एनं भ्रातृव्यं व्यश्वं विगताश्वमेव करोति। शब्दसाम्यात् स्तुतिः ॥ ६ ॥

तदेव प्रकारान्तरेण स्तौति—

**परिष्टुब्धेडं भवति पर्येवैनं वृश्चति ॥ ७ ॥**

---

2. M. स्तौति for प्रशंसति.

3&4. J. बृहतीं for बृहती.

5. J. अतः for अत्र; RKI om. अत्र...०भवतीति (L 8).

8. J. ०वृत्० for ०वृतः.

9. J. after वक्तव्या adds: त्रिवृत्त्रिणवयोश्चास्मै 36 चत्वारस्त्रिवृत इति।

12. J. ins. तु चतुरुत्तया चतुर्, R. चतुर् after संपत्तिः; T. ०संख्याकाभिः for ०संख्याभिः.

13. R. ins. शत before०शत० see CN.

वैयश्वमेव साम यतः परिष्टुब्धेडं परिष्टुब्धमिडेति निधनं यस्य तत् तथोक्तम् । योन्यामृचि इडेति हि निधनम् । अतस्तेन एनं भ्रातृव्यं परिवृश्चत्येव ॥ ७ ॥

तेन पुनः प्रयोगविशेषं दर्शयति—

**वार्षाहरे पवमानमुखे भवतः । काशीतौपगवे नानदं साम क्रूराणि सामानि संभवन्ति स्तृत्यै ॥ ८ ॥**

पवमानमुखे माध्यंदिनार्भवयोः पवमानयोः मुखे वार्षाहरे सामनी भवतः । माध्यंदिनपवमाने अर्षा सोम द्युमत्तमः (सा. ५०३) इत्येकस्यां गायत्रवार्षाहरे । आर्भवे तु यस्ते मदो वरेण्यः (सा. ४७०) इत्यत्र । यत्र गायत्रवार्षाहरम् (रे ?) इति वचनात् । तथा पवस्व (सा. ६९२) इन्द्रमच्छ (सा. ६९७) इति अनयोः ऋचोः काशीतौपगवे सामनो । पुरोजिती वो अन्धसः (सा. ५४५) इत्यत्र नानदं साम । इति क्रूराणि हिंसाकारीणि सामानि भवन्ति । उद्गातारः संपादयन्ति । स्तृत्यै भ्रातृव्यस्येति ॥ ८ ॥

अत्र प्रकृतितः प्राप्तं सप्तदशं निषेधति—

**निस्सप्तदशस्तेन क्रूरः ॥ ९ ॥**

अयं संदंशयागो निस्सप्तदशः सप्तदशस्तोमेन हीनः कार्यः । तेन पशव्यस्य सप्तदशस्तोमस्य राहित्येन क्रूरः भ्रातृव्यस्य पशुहानिकर इति ॥ ९ ॥

अत्र श्येनवैशेषिकान् धर्मानतिदिशति—

**समानमितरच्छ्येनेन ॥ १० ॥**

---

10. RJMIK. वार्षाहरम् for गायत्रवार्षाहरम्.
12. J om. इति M. ०कराणि for ०कारीणि.
13. J adds उत्पादयन्ति before संपादयन्ति.
14. T. ०दशस्तोमं for ०दशं.
16. T. पुनः कार्यम् for हीनः कार्यः.
17. J. पशून् विकरोति for पशुहानिकरः.
18. RKMI om. अत्र...०दिशति.
19. MIK om. समानम्....०च्छ्येनेन.

व्याख्यातचरमेतत् । अत्र कल्पः—श्यैनमाज्यबर्हिष्पवमानम् अर्षा सोम द्युमत्तमः (सा. ५०३) इति गायत्रवार्षाहरे । पुनानः सोम धारया (सा. ५११) इति वैयश्वम् एकस्यां, वषट्कारणिधनमेकस्यां, रौरवमेकस्याम् । यौधाजयं तिसृष्वौशनमन्त्यं रथन्तरं च वामदेव्यं च सप्तहं च कालेयं च । यस्ते मदो वरेण्यः (सा. ४७०) इति गायत्रं वार्षाहरं सत्रासाहीयम् । पवस्व (सा.    ) इन्द्रमच्छ (सा. ५६६) इति काशीतौपगवे । पुरोजिती वो अन्धसः (सा. ५४५) इति नानदान्धीगवे । सामत्रयाणां यत्प्रथमं कार्यम् । अन्त्यं यज्ञायज्ञीयम् अग्निष्टोमसाम द्वे त्रिवृती स्तोत्रे द्वे द्वादशे द्वे पञ्चदशे द्वे एकविंशे द्वे चतुर्विंशे द्वे त्रिणवे (म. क्षु. ?) ॥ इति । अत्र सामत्रयाणां यत्प्रथममित्यस्य वाक्यशेषस्यायमभिप्रायः । हाउ हाउ हाउ । अस् । फट् । सृस् हस् । प्रायत् । चक्राम् (आ. गा. २.७.५१.४) इति योनावुत्पन्नं पुरोजिती वो अन्धसः (सा. ५४५) इत्यस्मिंस्तृचे ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे चतुर्थाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

5. R. गायत्रवार्षाहरे for गायत्रं वार्षाहरं.

12. MK. ०जितमिति, TI. ०जित्यामिति for ०जीती...०स्तृचे.

## पञ्चमः खण्डः

अथ प्रतिज्ञापूर्वकं वज्रयागं दर्शयति—

**अथैष वज्रोऽभिचरन् यजेत वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै ॥ १ ॥**

अथ अनन्तरम् एषः वक्ष्यमाणो वज्रो वज्रसादृश्यात् वज्राह्वयो यागः। उच्यत इति शेषः। एतेन वज्रेणाभिचरन् भ्रातृव्यं जिघांसुर्यजेत। वज्रसंघातात्मकत्वात् अयं यज्ञो वज्रः। संघातिनां स्तोत्रीयाणां वज्रात्मकत्वात्। तेन वज्रेणैव वज्रम् एवास्मै भ्रातृव्याय प्रहरति। स्तृत्यै तस्य हिंसार्थम् ॥ १ ॥

के पुनः समुदायिनो वज्राः? यत्समुदायो वज्र इत्याशङ्क्य तद्विवक्षुराह—

**सर्वः पञ्चदशो भवति ॥ २ ॥**

अस्य सर्वाण्यवयवरूपाणि स्तोत्राणि पञ्चदशानि। तेन सर्वोऽप्यवयवी पञ्चदशो भवतीति ॥ २ ॥

किं ततः? इत्यत आह—

**वज्रो वै पञ्चदशः, तमेवास्मै वज्रं प्रहरति स्तृत्यै ॥ ३ ॥**

पञ्चदशो वज्र एव। ऐन्द्रत्वसाम्यात्। अतस्तदवयवात्मकानि स्तोत्राण्यपि वज्ररूपाणि। तेन तं प्रसिद्धं वज्रं हिंसासाधनम् एव अस्मै भ्रातृव्याय प्रहरति स्तृत्यै ॥ ३ ॥

तत्र धर्मविशेषं दर्शयति—

**उक्थ्यः षोडशिमान् भवति ॥ ४ ॥**

---

2. M. यज्ञ for वज्र०; I. विदधाति for दर्शयति.

7. J trans. यज्ञः after वज्रः; MT. संघातिता, K. संघातितानां for संघातिनां.

8. J om. एव; J. यज्ञम् for वज्रम्.

उक्थमर्हतीत्युक्थ्यः । उक्थार्हः उक्थवान् भवतीत्यर्थः । किं च षोडशिमान् भवतीति ॥ ४ ॥

तदुभयं स्तौति—

**पशवो वा उक्थानि । वज्रः षोडशी । वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै ॥ ५ ॥**

उक्थानि पशवो वै पशव एव । तत्साधनत्वात् । षोडशी वज्रः षोडशिसामान्यमनुष्टुप्सु कुर्वन्तीति वचनात् । षोडशिन आनुष्टुभत्वे वाग्वा अनुष्टुब् वाग्वै वज्र इति प्रशंसनात् षोडशिनो वज्रत्वम् । तेन वज्रेणैव वज्रमेवास्मै भ्रातृव्याय प्रहरति । स्तृत्यै भ्रातृव्यपशूनाम् । उक्थानां पशुरूपत्वेन स्तुतेरर्थवत्त्वायेत्यवगन्तव्यम् ॥ ५ ॥

तत्र षोडशिसाम्नः शक्करीषु गानं दर्शयति—

**तस्य महानाम्न्यः षोडशिसाम भवन्ति ॥ ६ ॥**

तस्य वज्राख्यस्य महानाम्न्यः, विदा मघवन् (सा. ६४१) इत्याद्याः (आ. गा. परिशिष्ट १—३.) शक्वर्यः षोडशिसाम भवन्तीति । तासु षोडशिसाम कुर्यादित्यर्थः ॥ ६ ॥

तदेतत् प्रशंसति—

**वज्रो वै महानाम्न्यः । वज्रः षोडशी । वज्रेणैवास्मै वज्रं प्रहरति स्तृत्यै ॥ ७ ॥**

---

1. RMTIK. om. उक्थमर्हतीति and उक्थार्हः.
7. R. ०ष्टुभत्वेन for ०ष्टुभत्वे.
8. RIK. प्रशस्तत्वात् for प्रशंसनात्; J. वज्रत्वेन for वज्रत्वम्.
9. M. इति भ्रातृव्यानां for भ्रातृव्य०; J.रथानां for उक्थानां.
10. J. श्रुते० for स्तुते०; J. ०वत्त्वात् येभ्यो गन्तव्यम् for ०वत्त्वायेत्यवगन्तव्यम्.
12. M. षोडशी for षोडशि; RJIM. भवति for भवन्ति.
13. T adds. यज्ञस्य after वज्राख्यस्य.
14. RMIK. भवतीति for भवन्तीति.

महानाम्न्यो वज्र एव । ऐन्द्रत्वसाम्यात् । स नः स्वर्षदति द्विषः (सा. ६४७<sup>c</sup>) इति लिङ्गात् । राक्षोघ्नत्वसाम्याद्वा । षोडशी वज्रः । षोडशिनो वज्रत्वं प्रागेवादर्शि । तस्मात् वज्रेणैव वज्रमेव अस्मै भ्रातृव्याय प्रहरति स्तृत्यै तस्येति ॥ ७ ॥

संदंशवैशेषिकधर्मानदिशति—

## समानमितरत् पूर्वेण ॥ ८ ॥

पूर्वेण अनन्तरोक्तेन संदंशेन इतरत् समानम् । संदंशे ये विशेषधर्मा विहितास्तेऽत्र कार्या इत्यर्थः । अत्र कल्पः—पवस्वेन्दो वृषा सुतः (सा. ४७९) अपघ्नन् पवते मृधः (सा. ५१०) इति पुरस्तात् पर्यासस्य तृचे उद्धरति । सत्रासाहीयं पुरोजिती वो अन्धसः (सा. ५४५) इति नानदमेकस्यां तस्यामेवान्धीगवं श्यावाश्वमेकस्यां सामैकस्यां त्रयाणां यद् द्वितीयं प्रमंहिष्ठीयमौपगवम् उद्वंशीयं महानाम्न्यः षोडशिसाम । समानमितरत् । पूर्वे सर्वः पञ्चदशः । क्लृप्तो ज्योतिष्टोमः शान्त्यर्थः शान्त्यर्थः (म.सू.५.९) इति । क्लृप्तो ज्योतिष्टोमः शान्त्यर्थः इत्यस्यायमर्थः—सर्वेष्वभिचारयज्ञेषु समाप्तेषु अभिचारयज्ञकृतदोषशान्त्यर्थं प्रकृतिभूतो ज्योतिष्टोमः कार्य इत्यर्थः ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये चतुर्थाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

2. KM adds इन्द्र० before राक्षोघ्न० ; RTIK. ०साम्यात् । तद्वा for साम्याद्वा.

3. RTKI. प्रयोगो वा दर्शितः for प्रागेवादर्शि; T om. एव.

7. T. रोक्तौ for ०रोक्तेन; J adds. गानं after इतरत्.

14. T. समापिते for समाप्तेषु.

15. I. आभि० for अभि० ; T. यज्ञेषु ; for यज्ञ०.

## षष्ठः खण्डः

अथ पञ्चविंशब्राह्मणोक्ताभ्यां त्रयोदशाहाभ्यां विलक्षणं त्रयोदशाहं वैश्वदेवाख्यं सत्रं निरूप्यते । तत्राहःक्लृप्तिं दर्शयति—

**अतिरात्रश्चतुर्विंशं प्रायणीयमहरभिजित् त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजिन्महाव्रतं चातिरात्रश्च ॥ १ ॥**

अतिरात्रश्चतुर्विंशं चतुर्विंशस्तोमयुक्तं प्रायणीयमहरित्येते आद्ये अहनी । अभिजिदाद्यो विश्वजिदन्तो मध्यमो नवरात्रः । महाव्रतमतिरात्र इत्येते अन्तिमे अहनी इति ॥ १ ॥

तदेतत् सत्रं विश्वदेवकर्तृकत्वेन सोमगृहपतित्वेन च प्रशंसति—

**विश्वे देवाः सत्रमासत सोमेन राज्ञा गृहपतिना । तेऽब्रुवन्त्सोम एव नो राजा सर्वत्र विभवेदिति । तस्मात् सोमो राजा सर्वाणि नक्षत्राण्युपैति । सोमो हि रेतोधाः ॥ २ ॥**

राज्ञा दीप्तेन सोमेन गृहपतिना सह विश्वे देवाः सत्रमासत ते एवमब्रुवन् नः अस्माकं सर्वत्र सर्वेष्वपि लोकेषु सोम एव राजा विभवेत् विशेषेण भूयादिति । यत एवं तस्मात् सोमो राजा सर्वाणि नक्षत्राणि उपैति प्राप्नोति आधिपत्येन । किं च, हि यस्मात् सोमो

---

2. J om. त्रयोदशाहाभ्यां विलक्षणं.
7. J. प्रथमे, TK. आद्यम् for आद्ये.
8. RKI. ०रात्रम् for ०रात्रः.
10. J om. सोमग्रहपतित्वेन च.
11&14. MT. ग्रह० for गृह०.
15. RJM om. ते.
17. J. आप्नोति for आधिपत्येन.

रेतोधाः रसात्मकत्वेन लोहितादिपरिणामद्वारेण रेतस आधाने हेतुः। अतोऽपि सोमगृहपतिकं सत्रं प्रशस्तमित्यर्थः ॥ २ ॥

तदीयं मध्यमं नवरात्रं स्तोतुमवयुत्यानुवदति—

**नवाहं संवत्सरस्य गर्भमुपयन्ति ॥ ३ ॥**

य एतत्सत्रमुपेयुः ते संवत्सरस्य प्रकृतिभूतस्य संवत्सरसाध्यस्य गवामयनस्य विकृतित्वात् त्रयोदशाहं सत्रमपि संवत्सरनाम्नोच्यते। तस्यान्तः गर्भं मध्यमं नवाहम् उपयन्तीति ॥ ३ ॥

अनूदितमर्थं स्तौति—

**नवाहो वै संवत्सरस्य प्रतिमा। नव प्राणाः। प्राणानेवावरुन्धते ॥ ४ ॥**

नवाहो वै नवरात्र एव संवत्सरस्य सत्रस्य प्रतिमा सदृशः तत्रत्यानां सर्वेषां स्तोमानां पृष्ठानां च अतिदेशतो विद्यमानत्वात्। तथा नव प्राणाः। अयं नवाहो नवसंख्याकाः प्राणाः। सप्त शीर्षण्याः प्राणाः द्वाववाञ्चौ (श. ब्रा. ६.४.२.५; तै. सं. ५.१.७.१) इति श्रुतेः। य एतं नवाहमुपेयुः ते प्राणानेवावरुन्धते प्राप्नुवन्ति ॥ ४ ॥

प्रकारान्तरेण स्तौति—

**प्रजावन्तो जीवा ज्योतिरश्नुवते य एता उपयन्ति ॥ ५ ॥**

---

1. JM. असावपि, K T. असोपि for अतोऽपि.

2. KJ. सोमः for सोम०; M adds सोमः before सोम०; MR. ग्रह० for गृह०; J. ०पतिः किं शस्तम् for ०पतिकं सत्रं प्रशस्तम्; T. शस्त्रं for सत्रं.

3. J. उक्तमिति for स्तोतुमवयुत्या; M. एव युक्त्या, K. अवयुक्त्या, R. अवयवादि for अवयुत्या.

6. MRI. गवामयन० for गवामयनस्य; P.MIK. om. सत्रम्; JKM. om. (अ)न्तः; KM. अस्य for तस्य.

11. J add. अयं and T. यन्नवाहो after वै; M. संवत्सरसत्रस्य for सत्रस्य.

13. J. अथ for अयं.

14. RI om. ये; KRI एवं for एतं.

15. J adds. नव before प्राणान्.

य एता रात्रीः। नवरात्रमित्यर्थः। उपयन्ति ते प्रजावन्तः पुत्रपौत्रादियुक्ताः रेतोधानहेतुसोमगृहपतिकयागानुष्ठानात् जीवाः शतवर्षलक्षणपुरुषायुषश्च सन्तः प्राणात्मकत्वनवरात्रोपायनात् ज्योतिः प्रकाशं कीर्तिम् अश्नुवते प्राप्नुवन्ति। फलान्तरस्यात्राविधानात् एतदेव फलं रात्रिसत्रन्यायेनेत्यवगन्तव्यम् ॥ ५ ॥

इति षड्विंशब्राह्मणे चतुर्थाध्याये
षष्ठः खण्डः ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणव्याख्याने चतुर्थाध्यायः समाप्तः ॥ ४ ॥

---

2. R. ग्रह॰ for गृह॰; RJT. ॰पति॰ for ॰पतिक॰.
3. R. ॰पधानात्, T. ॰पयानात् for ॰पायनात्.

पञ्चमोऽध्यायः

## प्रथमः खण्डः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अग्निहोत्रं निरूपयितुमादौ तत्प्रशंसार्थं देवादिविषयामाख्यायिकामाह—

**प्रजापतिस्तपोऽतप्यत । तस्य ह वै तप्यमानस्य मनः प्राजायत देवान् सृजेयमिति । त इमे देवा असृज्यन्त । दिवा देवानसृजत । नक्तमसुरान् । यद्दिवा देवानसृजत तद्देवानां देवत्वम् । यदसूर्यं तदसुराणामसुरत्वम् । यत् पीतत्वं तत्पितॄणां पितृत्वम् ॥ १ ॥**

प्रजापतिर्विधाता पुरा तपोऽतप्यत चकार । तस्य तपसा तप्यमानस्य विशुद्धसत्त्वस्य देवान् सृजेयमिति मनो बुद्धिः प्राजायत । ततः ते इमे प्रसिद्धा इन्द्रादयो देवाः तेन असृज्यन्त । कथम्? दिवा अहनि देवान् , नक्तं रात्रौ असुरान् [असृजत] । यत् यतो दिवा देवानसृजत प्रजापतिः तद् देवानां देवत्वम् अतिशयितदीप्तिमत्त्वम् । यत् यतो असूर्यं, न विद्यते सूर्यो यस्मिन् तत् असूर्यं नक्तम् । कालाध्वनोरत्यन्तसंयोगे (पा. २. ३. ५) इति द्वितीया । असुरानसृजतेत्यनुषङ्गः । तत् तेनासुराणामसुरत्वं कर्मणि प्रकाशराहित्यम् । यत् यतः पीतत्वम् । पा पान

5. RIK. अग्निहोत्रप्रशंसां, M. वैश्वदेवसत्रं for अग्निहोत्रं.
12. M adds. तप: before चकार.
16. J. इति तेषां तदाप्ति॰ for अतिशयितदीप्ति॰.
18. J om. द्वितीया; J. यान् for असुरान्.
19. RMIK. om. यद् यत: J. om. पीतत्वम्.

इति धातोः पीयन्त इति कर्तरि क्विप् । तेषां भावः पीतत्वम् । कव्यस्यामृतस्य पातृत्वम् । तेन पितॄणां पितृत्वम् ॥ १ ॥

सन्त्वेतादृशाः देवाः । किं तत इत्यत्राह—

देवा वै स्वर्गकामास्तपोऽतप्यन्त । तेषां तप्यमानानां रसोऽजायत । पृथिव्यन्तरिक्षं द्यौरिति । तेऽभ्यतपन् । तेषां तप्यमानानां रसोऽजायत । ऋग्वेदः पृथिव्या यजुर्वेदोऽन्तरिक्षात् सामवेदोऽमुष्मात् । तेऽभ्यतपन् । तेषां तप्यमानानां रसोऽजायत । ऋग्वेदाद्गार्हपत्यो यजुर्वेदाद्दक्षिणाग्निः सामवेदादाहवनीयः । तेऽभ्यतपन् । तेषां तप्यमानानां पुरुषोऽजायत । सहस्रशीर्षः सहस्राक्षः सहस्रपात् ॥ २ ॥

ततः ते देवाः अग्निहोत्राद् स्वर्गं कामयमानाः सन्तः तपः चक्रुः । तेषां तप्यमानानां तेभ्यस्तप्यमानेभ्यः पृथिव्यन्तरिक्षं द्यौरिति लोकत्रयात्मको रसोऽजायत । तत्सारभूताः पृथिव्यादयो लोका अभ्यतपन् ऋग्वेदादीनुद्दिश्य तपश्चक्रुः । तेभ्यस्तप्यमानेभ्यः ऋग्वेदाद्यात्मको रसोऽजायत । कथम् ? पृथिव्या ऋग्वेदात्मको रसः समजनि । एवमुत्तरत्रापि । ते वेदा अभ्यतपन् । तेभ्यो गार्हपत्याद्यात्मको रसोऽजायत । कथम् ? ऋग्वेदाद् गार्हपत्यो रसोऽजायत । समानमन्यत् । ते गार्हपत्यादयोऽप्यभ्यतपन् । तेभ्यस्तप्यमानेभ्यः सहस्रशीर्षः अपरिमितमूर्धा सहस्राक्षः असंख्यातनयनः सहस्रपात् अपरिमितपादः पुरुषो रसोऽजायत । एवं चतुर्थरसात्मकत्वात् प्रशस्ततमोऽयं पुरुष इत्यर्थः ॥ २ ॥

1. MK. पीत्वं for पीतत्वं.
2. J. पीतत्वम, M. पात्रत्वम्, KIR. पितृत्वम् for पातृत्वम्.
10. ShK. ०शीर्षाः for ०शीर्षः.
12. R om. तेभ्यस्...तपश्चक्रुः (L. 14.)
13. J adds अपि after. लोकाः
14. TJ. ऋग्वेदो for ऋग्वेदाद्यात्मको.
17. RKI om. अपि.
18. RI. असंख्याक for असंख्यात.

भवत्वेवम् । ततः किमित्यत्राह—

**ते देवाः प्रजापतिमुपाधावन् वेदशरीरैर्वा इदममृतशरीरं न ह वा इदं मृत्योः समाप्स्यत इति तेऽब्रुवन् को नामासी(से ?)ति ॥ ३ ॥**

ततः ते देवाः प्रजापतिं स्रष्टारम् उपाधावन् । उपेत्य च वेदशरीरैः ऋग्वेदाद्यात्मकैः गार्हपत्यादिभिः यदिदम् अमृतशरीरमुत्पन्नं तद् इदं मृत्योर्न समाप्स्यते समाप्तिं प्राप्नोतीति । ह वा इत्येतावैतिह्यद्योतनार्थौ । स पुरुषः को नाम कः खल्वासेति एवं प्रजापतिमब्रुवन् । अन्तिम इतिकारो देवानां प्रश्नपरिसमाप्तिद्योतनार्थः ॥ ३ ॥

प्रजापतेरुत्तरमाह—

**स होवाच यज्ञो नामेति ॥ ४ ॥**

स तैरेवं पृष्टः प्रजापतिः उवाच । यज्ञो नाम अग्निहोत्रयज्ञ एव सोऽयं पुरुषः नान्यः कश्चिदिति ॥ ४ ॥

तदिदं विविदिषितमग्निहोत्रं सद्योयज्ञसंस्थात्मकत्वेन प्रशंसति—

**तेषां प्रजापतिः सद्योयज्ञसंस्थामुपैति । सद्यो ह वा एष यज्ञः संस्थामुपैति ॥ ५ ॥**

---

3&7. M. समाप्स्यति for समाप्स्यते.

6. RI om. इदम्.

7. KMR. प्राप्त्‌ for प्राप्नोति ; KM. add भावः after इति ; J. इतिशब्दस्त्वेतावद्द्योतनार्थः for हवा...०द्योतनार्थौ; M. इति हीत्ये० for ह वा इत्ये०.

8. R. नामा त्वं, T. न(ा)मारम, K. नामारं for नाम ; RI(आ) त्मासीति, M. (आ)त्मंवेति for (आ) सेति.

12. M. तैरयं for तैरेवं ; MKI ०होत्रो० for ० होत्र ; J. अग्निहोत्रम् for अग्निहोत्र यज्ञ एव.

13. J. ततोऽन्यत् किंचिन्नास्तीति for नान्यः कश्चिदिति.

14. J. om. तदिदं विविदिषितम् .

16. RJ. यज्ञ० for यज्ञः.

तेषामुत्पन्नानां देवानामर्थे प्रजापतिः सद्योयज्ञसंस्थामुपैति । सद्यः समाप्यमानयज्ञात्मकत्वादग्निहोत्रं प्राप्नोतीत्यर्थः । अत एव एषोऽग्निहोत्ररूपो यज्ञः सद्यः संस्थां समाप्तिमुपैति प्राप्नोति ॥ ५ ॥

ननु दीक्षणीयादीतिकर्तव्यताया अभावात् कथमस्य यज्ञत्वमित्याशङ्क्य प्रसिद्धज्योतिष्टोमादियज्ञसादृश्यसिद्ध्यर्थम् अत्रापि दीक्षणीयदीतिकर्तव्यतां संपादयति—

यद्गार्हपत्यं प्रादुष्करोति सा दीक्षणीया । यद्दाक्षिणाग्निं चाहवनीयं च सा प्रायणीया । यत्समिधोऽभ्यादधाति ता उपसदः ॥ ६ ॥

गार्हपत्यम् अग्निं यत् प्रादुष्करोति अग्निहोत्रार्थं प्रादुर्भावयति सा दीक्षणीया दीक्षणीयाख्येष्टिः । प्राथम्यसाम्यात् । दक्षिणाग्निमाहवनीयं चाग्निं यत् प्रादुष्करोति सा प्रायणीयेष्टिः उपकारकत्वसाम्यात् । समिधोऽभ्यादधते समिदाधानं कुर्वन्ति इति यत् ता उपसदः उपसदाख्यहोमाः ॥ ६ ॥

अथ अग्निहोत्रे उत्पूताज्यस्कन्दने प्रायश्चित्तं दर्शयति—

अथ यस्याज्यमुत्पूतं स्कन्दति । सा वै स्कन्ना नाम आहुतिः । ततो वै यजमानः प्रमायुर्भवति । वरो देयः । सैव तस्य प्रायश्चित्तिः ॥ ७ ॥

---

1. RIK. अर्थं for अर्थे.

3. JMTK. om. सद्यः.

4. J. अत्र for ननु ; RKM. दीक्षणीयादिति T. दक्षिणायादिति for दीक्षणीयादीति.

5. KMT. दीक्षणीयादिति for दीक्षणीयादीति.

7. KT दक्षिणा० for यद्दक्षिणा०.

8. MTK. ०दाधते for दधाति.

11. J. उपकारत्व० for प्राथम्य०; J. om. दक्षिणाग्निम् ...०साम्यात् .

12. KT. वा० for चा०; RI. ०सामान्यात् for साम्यात् ; RJI add यत् before समिधो०.

13. RJ. ०दधाति for ०दधते See CN ; RJIK. तद्. for ताः J. उपसदाख्यो होमः for उपसदाख्यहोमाः.

अथशब्दो वाक्योपक्रमे । यस्य यजमानस्य उत्पूतम् उत्पवनेन संस्कृतम् आज्यं स्कन्दति पात्रात् सा वै सैव स्कन्ना नाम स्कन्नरूपा आहुतिर्भवतीति । ततो वै स्कन्नाहुत्या यजमानः प्रमायुर्भवति मरणशीलो भवतीत्यर्थः । तस्मिन्निमित्ते वरो देयः गोरूपां दक्षिणां दद्यादित्यर्थः । सैव दक्षिणा तस्य आज्यस्कन्दस्य प्रायश्चित्तिः । प्रत्यवायपरिहारार्थं कर्मेत्याहुर्ब्रह्मवादिनः ॥ ७ ॥

अनुत्पूताज्यस्कन्दने प्रायश्चित्तमाह—

**अथ यस्याज्यमनुत्पूतं स्कन्दत्यसौ वा अस्कन्ना नाम आहुतिः । ततो वै यजमानस्य चित्तं प्रमायुर्भवति । चित्रं देयं सैव तस्य प्रायश्चित्तिः ॥ ८ ॥**

अथ पुनः यस्य यजमानस्य संबन्धि आज्यम् अनुत्पूतम् उत्पवनरहितं स्कन्दति पात्रात्, असावस्कन्ना नाम अस्कन्नरूपा आहुतिः । ततः तयैवाहुत्या यजमानस्य चित्तं प्रमायुर्विनाशि भवतीति तन्निमित्तं चित्रं नानाविधं द्रव्यं देयम् । सैव तस्य प्रायश्चित्तिरनुत्पूतस्कन्दप्रायश्चित्तिरिति ॥ ८ ॥

अग्निहोत्रे सवनत्रयं संपादयति—

**यद्गार्हपत्ये जुहोति तत्प्रातःसवनम् । यद्दक्षिणाग्नौ जुहोति तन्माध्यंदिनं सवनम् । यदाहवनीये जुहोति तत्तृतीयसवनम् ॥ ९ ॥**

---

1. J. om. शब्दो...यस्य; J. om. उत्पवनेन...आज्यं.
2. J. om. पात्रात्, सैव and स्कन्नरूपा.
3. J. om. भवतीति...०हुत्या.
4. MTK. निमित्तं for निमित्ते.
5. J. om. आज्य०; RI. ०स्कन्दनस्य for ०स्कन्दस्य; J. adds इति after ०श्चित्तिः.
9. K. वित्तं for चित्तं.
12. RMIK. add तत् after ०रहितं; J. पात्रम् for पात्रात्, M. असौ वै स्कन्नानां for असावस्कन्ना नम; T. ०स्कन्नानां for ०स्कन्ना नाम०; J. आज्याहुतिः for आहुतिः.
13. J om. विनाशि, and (इ)ति.
14. JRTK. om. प्रायश्चित्तिर्; J. ०स्कन्दस्य, RI. ०स्कन्दन० for ०स्कन्द०

गार्हपत्ये अग्नौ जुहोतीति यत्तदेव प्रातःसवनम् । प्राथम्यसाम्यात् । एवमन्यदपि ॥ ९ ॥

यन्मार्जयते सोऽस्यावभृथः ॥ १० ॥

अत्रैवोदयनीयादिसंपत्तिं दर्शयति—

यदन्ना ददाति तेन उदयनीयस्योदवसानीयस्य समाप्त्यै ॥ ११ ॥

अन्ना अन्नानि हवींषि आददाति इति यत् तेन उदयनीयस्य एतदाख्यस्य कर्मणः उदवसानीयस्य च समाप्त्यै कृतं भवतीत्यर्थः ॥ १०-११ ॥

अग्निहोत्र एव मथने अग्नेरनुत्पादे विकल्पेन प्रायश्चित्तं दर्शयति—

अथ यस्याग्निर्मथ्यमानो न जायेतान्यमाहृत्यास्मिन्नवकाशे जुहुयात् ब्राह्मणस्य वा हस्तेऽजस्य वा कर्णे कुशस्तम्बे वाप्सु वा जुहुयात् ॥ १२ ॥

अथ पुनः यस्य यजमानस्य अग्निर्मथ्यमानो यदि न जायेत तर्हि अन्यमाहृत्य लौकिकमग्निमानीय अस्मिन्नवकाशे आहवनीयाधारे व्याहृतिभिर्जुहुयात् । लौकिकाग्नेरप्यभावे ब्राह्मणस्य हस्ते जुहुयात् । एवमन्यदपि व्याख्येयत् । तथा चाश्वलायनः—अग्निहोत्राय कालेऽग्नावजायमानेऽन्यमानीय जुहुयात् । पूर्वालाभे उत्तरोत्तरं ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु (आ. श्रौ. सू. ३.१४.१४-१६) इत्यादि ॥ १२ ॥

---

1. MTIK. add यद् before अग्नौ ; J. om. (इ)ति.

3. MTIK om. यन्मार्जयते...भृथः.

4. R trans. अत्रैवोद०...दर्शयति before यन्मार्जयते.

7. M. हविष्यानि , KT. हविष्यो for हवींषि ; J. अन्नादि हवींषि अन्ना for अन्ना अन्नानि हवींषि ; JMKT. om. इति.

10. M. अन्यस्मिन् for अस्मिन् .

13. J om. यदि.

14. J. ०नीयाग्नौ, K. ०नीयागारे for ०नीयाधारे.

अग्निहोत्रे स्वयंकृतहोमस्तुत्यर्थं गौणकर्तृ[प्रदर्शन]पुरःसरम् उत्तरोत्तरं मुख्यान् कर्तॄन् दर्शयति—

**अन्यैः शतहुतान् होमानेकः शिष्यहुतो वरम् ।**
**शिष्यैः शतहुतान् होमानेकः पुत्रहुतो वरम् ॥**
**पुत्रैः शतहुतान् होमानेको ह्यात्महुतो वरम् ॥ १३ ॥**

अन्यैः शिष्यादिव्यतिरिक्तैः शतहुतान् शतशो हुतान् कृतान् होमान् अपेक्ष्य शिष्यहुतः शिष्येण कृतः एको होमः वरम् उत्कृष्टः । एवमन्यदपि व्याख्येयम् ॥ १३ ॥

अस्त्वेवं किं तत इत्याह—

**स्वयं होता स्वयं दोही स्वयमेवोपतिष्ठेताग्निहोत्रम् ॥ १४ ॥**

यत एवमात्मकृतो होमः प्रशस्तः तस्मात् स्वयं होता देवानामाह्वाता स्वयमेव दोही अग्निहोत्रार्थं पयसो दोग्धा सन् स्वयमेव यजमानः स्वयमेवाग्निहोत्रमुपतिष्ठेत ॥ १४ ॥

तत्र दक्षिणां दर्शयति—

**हौम्यशेषं दक्षिणा ॥ १५ ॥**

हौम्यशेषं हुतावशिष्टं हविरेव दक्षिणा । नान्यदित्यर्थः ॥ १५ ॥

---

1. R. ०कृतैकहोम, M. ०कृतो होम०, K. ०कृतेकहोम० T. ०कृतकहोम for ०कृतहोम ; M. ०स्तुत्यर्थः for स्तुत्यर्थं.

3&4. JMK. ०हुताद् होमात् for ०हुतान् होमान् .

5. T. ०हुतैर्होमान् for हुतान् होमान् .

7. RKI. शिष्य० for शिष्येण.

15. J adds. अग्निहोत्रे after दर्शयति.

16&17. MTK. होम्य० for हौम्य.

17 R. हुत, MTK. हुत्वाव० for हुताव०.

अथोक्तमग्निहोत्रं प्रशंसति—

सर्वैर्ह वा एतस्य यज्ञक्रतुभिरिष्टं भवति । य एवं विद्वानग्निहोत्रं जुहोति ॥ १६ ॥

य एवम् उक्तरीत्या विद्वान् जानन् अग्निहोत्रं जुहोति एतस्य सर्वैर्यज्ञक्रतुभिः एव इष्टं भवति । सर्वे क्रतवः कृता भवन्तीत्यर्थः ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे पञ्चमाध्याये प्रथमः खण्डः ॥ १ ॥

---

1. RTIK. तथो०, J. यथो० for अथो०.

4. M. जानानः for जानन्; TMK. add इति after जुहोति.

5. M. om. एव; M. adds इति after भवति; J. adds अपि after सर्वै.

# द्वितीयः खण्डः

यदुक्तमग्निहोत्रमात्रेणैव सर्वैक्रतुभिरिष्टं भवतीति तदेतदाख्यायिकया उपपादयति—

**प्रजापतिर्वा एतत्सत्रं सहस्रसंवत्सरमसृजत । तेषां प्रजापतिः सहस्रसंवत्सरं गवामयनेऽवारुन्धत । गवामयनं द्वादशाहे द्वादशाहमतिरात्रे अतिरात्रं षोडशिनि षोडशिनमुक्थ्ये उक्थ्यमग्निष्टोमेऽग्निष्टोममिष्टिपशुबन्धयोरिष्टिपशुबन्धावग्निहोत्रे सर्वैर्ह वा एतस्य यज्ञक्रतुभिरिष्टं भवति । य एवं विद्वानग्निहोत्रं जुहोति ॥ १ ॥**

यतः पुरा प्रजापतिः खल्वेतत् प्रसिद्धं सहस्रसंवत्सरम् । वत्सरशब्दो दिनपरः । शतायुः पुरुषः (तै. सं ३. २. ६. ३) इति श्रुतेः सहस्रसंवत्सरं जीव[नस्य] मनुष्यस्य कस्याप्य[सं]भावात् । गन्धर्वादीनां सहस्रसंवत्सरजीवनेऽपि तेषामनुरूपसंहाराद्यसामर्थ्यान्नाधिकारः । न च यो मासः स संवत्सरः (        ) इति दर्शनात् संवत्सरशब्दो मासपर इति शङ्कनीयम् । तत्रापि आधानादूर्ध्वं सहस्रमासजीवनासंभवात् । नापि संवत्सरप्रतिमा वै द्वादशरात्र इति प्रयोगात् द्वादशरात्रपरता संवत्सरशब्दस्येति शङ्कनीयम् । प्रतिमाविशेषणत्वेनैवात्र संवत्सरशब्दस्य प्रयोगात् । न तु

---

10. MK. om. वत्सरशब्दो...संवत्सरं (L. 12.)

12. RJMIK. जीवितुं for जीवनस्य; T. after this hine is damaged, see *CN.*

13. M. ०संवत्सरं for ०संवत्सर०; J. अत्युपरूपसंहारासामर्थ्या० for अनुरूप०..., K. ०सामर्थ्येनानधि, MT. ०समर्थनाद[न]धि० for ०समर्थ्यान्नाधि०.

17. J. चतुर् for न तु.

द्वादशरात्रेषु प्रयोगा इति । अतः सहस्रदिवससाध्यं सत्रमसृजतेत्यर्थः । सृष्ट्वा च प्रजापतिः तेषामुपसन्नानां देवानामर्थे सहस्रसंवत्सरं सत्रं गवामयने एकसंवत्सरसाध्ये सत्रे अवारुन्धत् न्यरौत्सीत् । तच्च गवामयनं द्वादशाहे संस्थायज्ञे अवारुन्धदित्यनुषङ्गः । एवमन्यदपि व्याख्येयम् । तस्मात् अग्निहोत्रे सर्वस्याप्यवरोधात् अग्निहोत्रमात्रेण सर्वैर्यज्ञक्रतुभिरिष्टं भवतीति सिद्धमित्यर्थः ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे पञ्चमाध्याये द्वितीयः खण्डः ॥ २ ॥

---

1. J. रात्रिषु for रात्रेषु; JMK प्रयोगादिति for प्रयोग इति.

2. RJI. उपसंपन्नानां, M. उत्पन्नानां for उपसन्नानां ; J. ०वत्सरसाध्ये सत्रे for ०वत्सरं सत्रं ; M. om· सत्रं; J. ०मयनं for ०मयने.

3. J. om. एक०...सत्रे.

5. J. द्वादशाहसाध्ये for संस्थायज्ञे.

## तृतीयः खण्डः

अथेदानीमौदुम्बरी सविशेषा निरूप्यते । तत्र औदुम्बर्या उच्छ्रयणं विधातुं प्रशंसति—

**प्रजापतिर्देवेभ्य औदुम्बरीमुच्छ्रयति । असुषिरमूलामग्रन्थि पृथुबुध्नामेकजाम् ॥ १ ॥**

पुरा प्रजापतिर्देवेभ्यः स्वीये यागे असुषिरमूलाम् अच्छिद्रमूलाम् अग्रन्थि ग्रन्थिरहितां पृथुबुध्नां स्थूलमूलाम् एकजाम् अनेकशाखारहिताम् औदुम्बरीमुच्छ्रयति । अत एतादृगौदुम्बर्या उच्छ्रयणं प्रशस्तमित्यर्थः ॥ १ ॥

कियत्परिमाणमौदुम्बर्या इत्यत्राह—

**यजमानमात्र्यौदुम्बरी भवति ॥ २ ॥**

औदुम्बरी यजमानसंमिता भवतीत्यर्थः । तथा च श्रुत्यन्तरम्—यजमानेन संमितौदुम्बरी भवति (तै. सं ६. २. १०. ३) इति ॥ २ ॥

यदि कुब्जादयो यजमानास्तदा कथमित्याशङ्क्याह—

**अथ कुब्जवामना यजमाना ह्रस्वाश्चोर्ध्वबाहवः प्रच्छेदनं कुर्युः ॥ ३ ॥**

---

2. M. ०शेषं for ०शेषा.
8. JM. ०दृगौ० for ०दृशौ०.
9. MTK. यत् for कियत् ; MTK. om. अत्र.
13. RI. यथा for यदि; JT. तथा for तदा.
14. M. कुब्जा for कुब्ज०.
15. MTK. कुर्यात् for कुर्युः.

अथ यदि कुब्ज[वामनाः] यजमानाः । कुब्जो नाम कुणह्रस्वः । वामनो नाम अतिह्रस्वसर्वाङ्गः । ह्रस्वाश्च, ह्रस्वो नाम शास्त्रोक्तप्रमाणापेक्षया, भवेयुस्तर्हि ऊर्ध्वबाहवः स्युः । तैरूर्ध्वबाहुभिः औदुम्बरीं संमाय तस्याः प्रच्छेदनं कुर्यात्(र्युः?) ॥ ३ ॥

प्रश्नपूर्वकमौदुम्बर्या यागविशेषे छदनसंख्याविशेषं दर्शयति—

**कतिच्छदनौदुम्बरी भवति? नवच्छदनाग्निष्टोमसाद्यस्केषु । एकादश वैश्यस्तोमातिरात्रपौण्डरीकेषु । सप्तदश वाजपेयाप्तोर्याम्णोः । एकविंशत्यश्वमेधे । अष्टाचत्वारिंश[मि]तं पुरुषमेधे । अपरिमितं सर्वमेधे ॥ ४ ॥**

औदुम्बरी कतिच्छदना भवतीति प्रश्नः । अथोत्तरम् । अग्निष्टोमसाद्यस्केषु यागेषु । औदुम्बरी नवच्छदना भवतीति । वैश्यस्तोमाद्याख्येषु त्रिषु औदुम्बर्याः छदनानि एकादश कुर्यात् । एवमन्यदपि व्याख्येयम् ॥ ४ ॥

इदानीमौदुम्बर्या उच्छ्रयणं विधत्ते—

**य एवं वेद यदौदुम्बरीमुच्छ्रयत्यपचितिमेवाप्नोति ॥ ५ ॥**

यः पुमानेवम् ओदुम्बरीवर्मान् वेद । विदित्वा च यथोक्तामौदुम्बरीं यत् यदोच्छ्रयति तदा अपचितिं पूजाम् आप्नोति ॥ ५ ॥

---

1. RI. कुब्जा, MK. कुब्जो, T. कुब्ज for कुब्जवामनाः See *CN*. M. यजमानः for यजमानाः J. om. कुब्जो...०पेक्षया ; T. कुब्जा for कुब्जो; TK. om. कुण०....०पेक्षया.

3. TK. ०बाहुरजस्यु for ०बाहवः स्युः ; TK. संगाय, M. संभाव्य for संमाय.

5. JMT. विशेषेण, K. विशेष० for विशेषे.

8. MK. चत्वारिंशं for चत्वारिंश[मि]तं.

10. J. अर्थः for प्रश्नः.

11. RI. om. यागेषु, J. यज्ञेषु for यागेषु.

13. J. अदुम्वर्युच्छ्र० for औदुम्बर्या उच्छ्र०.

14. RJ. विद्वान् for वेद यद् .

16. RMKI. om. च.

अथ यथोक्तौदुम्बर्युच्छ्रयणस्यापचितिसाधनतामाख्यायिकयोपपादयति—

प्रजापतिरकामयतापचितिं प्राप्नवानीति । ऊर्गुदुम्बरः । ऊर्गन्नम् । अन्नं साम । तस्मात् सामगेभ्योऽपचितिं करवाणि इति । य एवं विद्वानौदुम्बरीमुच्छ्रयत्यपचितिमेवाप्नोति ॥ ६ ॥

पूर्वं प्रजापतिरपचितिं प्राप्नवानीति अकामयत । किं च, उदुम्बरः ऊर्क् । तद्धेतुत्वात् ऊर्क् च अन्नम् । अन्नं च साम । यतः साम अन्नात्मकं तस्मात् सामगेभ्यः । साम गायन्तीति सामगाः । तेभ्यः अपचितिं पूजां करवाणीति प्रजापतिः अकामयतेति संबन्धः । अतो यः पुमान् एवं यथोक्तलक्षणामौदुम्बरीं विद्वान् उच्छ्रयति सोऽपचितिमाप्नोत्येवेति ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे पञ्चमाध्याये तृतीयः खण्डः ॥ ३ ॥

1. RI. अवयुत्या, TK. अवयवोक्तौ for अथ यथोक्तौ० ; M. om. अथ.
4. RTK. om. इति , TMK. कृत्वा for विद्वा.
9. J. adds अहं after करवाणीति; J. करवाणीति for अकामयतेति.
10. JMTK. कृत्वा for विद्वा ; J. adds एव after ०चितिम .

# चतुर्थः खण्डः

अथ सविशेषं यूपं निरूपयितुमुपक्रमते—

**यूपं करोति सक्षीरं स्थूलं मूले बालाग्रमनुरूपम् ॥ १ ॥**

सक्षीरं क्षीरवद्वृक्षप्रकृतिकम् । स्थूलं मूले मूलप्रदेशे । बालाग्रम् अग्रप्रदेशे सूक्ष्मम् । मध्ये च अनुरूपम् मूलप्रदेशापेक्षया स्थौल्याभावेन अनुरूपम् एतादृशं यूपं करोति कुर्यादित्यर्थः ॥ १ ॥

अथ यथोक्तं यूपं वज्रत्वेन यज्ञविघ्नकर्तृरक्षोघ्नत्वेन च प्रशंसति—

**वज्रो वै यूपो वज्रेणैवास्मै भ्रातृव्यं प्रहरति ॥ २ ॥**

यूपो वज्र एव । तथा च तैत्तिरीयकम्—इन्द्रो वृत्राय वज्रं प्राहरत् । स त्रेधा व्यभवत् । स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम् (तै. सं. ५.२.६.१-२) इति । अतः अस्मै यजमानार्थं वज्रेणैव भ्रातृव्यं यागविघ्नकारिणं राक्षसं प्रहरति ॥ २ ॥

यूपस्य अष्टाश्रीकरणं विधत्ते—

**अष्टाश्रीः करोति ॥ ३ ॥**

तस्य यूपस्य अष्टसंख्याका अश्रीः करोति कुर्यात् । दिक्षु चतस्रः विदिक्षु चतस्र इति ॥ ३ ॥

---

4. KM. वृक्षं for वृक्षप्रकृतिकम् ; KM. om. स्थूलं ... भ्रातृव्यं (L. 8.) JT om. मूलप्रदेशे.

5. JT om. अग्रप्रदेशे ; JT. सूक्ष्माग्रं for सूक्ष्मम् ; RI om. मध्ये च; RI. ०रूपता for ०रूपं ; JT om. मूलप्रदेशा०...एतादृशं.

7. JT. om. अथ...रक्षोघ्न ; J. तत् , T. तं for च.

10. RM. व्यभवत् for व्यभक्.

11. J. यज्ञ० for याग०.

15. J adds इति after कुर्यात्.

तत् प्रशंसति—

**दश दिशः परिगृह्णाति। उभयतः पाङ्क्ते द्वे यूपे करोति॥ ४॥**

तथा सति ऊर्ध्वाधोदिग्भ्यां सह दश दिशः परिगृहीतवान् भवति। ततश्च यूपे यूपविषये उभयतः द्वयोः पार्श्वयोः द्वे पाङ्क्ते द्वे पञ्चसंख्ये करोति कृतवान् भवति। पञ्चपदा पङ्क्तिः (स. अ. सू. ५-६) इति संख्याम्नानात्॥ ४॥

विकल्पेन धर्मान्तरं दर्शयति—

**पञ्चदशसप्तदशैकविंशत्यरत्निं वा॥ ५॥**

पञ्चदशारत्निं वा सप्तदशारत्निं वा एकविंशत्यरत्निं वा कुर्यात्॥ ५॥

यूपस्य काम्यानि प्रकृतिद्रव्याणि दर्शयति—

**पालाशं पुष्टिकामस्य। बैल्वं ब्रह्मवर्चसकामस्य। औदुम्बरमन्नाद्यकामस्य। खादिरं बलकामस्य। वैभीतकराजवृक्षौ भ्रातृव्यवतः। क्रमुकाश्वत्थपाषाणाः यशस्कामस्य। यत्किंच यज्ञियं पशुकामस्य॥ ६॥**

पुष्टिकामस्य पालाशप्रकृतिकं यूपं कुर्यात्। एवमन्यदपि योज्यम्। यज्ञियं यज्ञार्हं यत्किंच वैकङ्कतादिकं वृक्षजातमस्ति तत्प्रकृतिकं यूपं पशुकामस्य कुर्यात्॥ ६॥

पालाशादिष्वेव वर्जनीयान् प्रतिज्ञापूर्वकं दर्शयति—

**तत्र वर्जनीया भवन्ति। गड्डुलो व्रणिलो व्यावृत्तः कुठिः कुब्जः शूलो दग्धः शुष्कः सुषिरो घुणजग्ध इत्यप्रशस्ताः॥ ७॥**

---

2. KT. पङ्क्तेर्, MI. पङ्क्तौ for पाङ्क्ते.

4. J. trans. सह before दिग्भ्यां; TK. सः for सह; RI. तथा, J. अतश्च for ततश्च.

5. T. पङ्क्तेर् for पाङ्क्ते.

6. J. साम्यात् for ०म्नात्.

15. R. व्याख्येयम् for योज्यम्.

17. K. om. पशुकामस्य.

18. J. पालाशेषु for पालाशादिषु; JT. ०पुरःसरं for पूर्वकं.

19. MSh. व्यावृक्तः for व्यावृत्तः

तत्र तेषु वर्जनीया भवन्ति गड्डुलो ग्रन्थियुक्तः । व्रणिलः पश्चादि-कृतव्रणोपेतः । व्यावृत्तः विरुद्धावृत्तः अप्रदक्षिणावर्त इत्यर्थः । कुठिः मुण्डः कुटिलो वा । कुब्जः शूलः । कुब्जो वक्राग्रः शूलस्तीक्ष्णाग्रः । दग्धः दावाग्निना । शुष्कः नीरसः । सुषिरः सनालः । घुणजग्धः कृम्यादिभि-र्भक्षितः । इत्येते अप्रशस्ताः ॥ ७ ॥

प्रतिज्ञापूर्वकमुपादेयान् दर्शयति—

**अथ प्रशस्ताः । शुद्धावर्ता अनुपूर्वसमाः प्रशस्ताः ॥ ८ ॥**

अथाप्रशस्तप्रदर्शनानन्तरं प्रशस्ता उच्यन्त इति शेषः । शुद्धावर्ताः प्रदक्षिणावर्ताः अनुपूर्वसमाः आनुपूर्व्येण समाश्च प्रशस्ता उपादेया इत्यर्थः ॥ ८ ॥

यूपाश्रिदेवताः प्रतिज्ञापूर्वं दर्शयति—

**यूपस्याश्रिदैवतानि । अग्निः पूर्वायाम् । यमो दक्षिणायाम् । वरुणः पश्चिमायाम् । सोम उत्तरायाम् । या विदिशस्तास्वा-दित्यरुद्रमरुद्वसवः । अपराजिताः पितरश्चाधरायाम् । साध्याश्चोर्ध्वायाम् ॥ ९ ॥**

---

1. J. एव for तेषु.

2. R. ०भक्षित०, I. क्षत० for कृत; MK. om. ०कृत० ; M. om. विरुद्धावृत्तः; RKI. ०वृत्तः for ०वर्तः.

4. J. सच्छिद्रः for सनालः; R. क्रिम्या० for कृम्या०.

6 RKI ०देयं for ०देयान्.

8. RI. om. प्रशस्ताः.

9. JT. वर्जनीय० for ०प्रशस्त०; J om. प्रदर्शन.

10. J. adds पालाशादयः after समाश्च.

12. T. यूपस्याश्री०, T. यूपाणि श्रितः०, RKI. यूपाश्रित० for यूपाश्रि०; JT. सप्रतिज्ञं for प्रतिज्ञापूर्वं.

13. RM. ०श्रीदैवतानि, T. ०श्रीदैवत्यानि, for ०श्रिदैवतानि.

14. TMK. ०स्तास्त आ० for ०स्तास्वा०; M. आदित्या रुद्रा मरुतो for आदित्यरुद्रमरुद्.

अथ यूपस्याश्रिदैवतान्युच्यन्त इति शेषः । पूर्वायामश्रावग्निर्दैवता । अन्यत्समानम् । या विदिशः सन्ति ता विदिशस्ते प्रसिद्धा आदित्यादयो यथासंख्यमधितिष्ठन्ति । अपराजिताः । यस्यां दिशि देवा असुरैः पराजिता नाभवन् सा अपराजिता । अधरा दिगित्यर्थः । सा पितृभ्यः । ऊर्ध्वायां च दिशि साध्याः तिष्ठन्ति । [सा] तद्देवत्येत्यर्थः ॥ ९ ॥

यथोक्तं यूपं प्रशंसति—

**सर्वदेवत्यो वै यूपः । यूपो वै बहुरूपः वज्रीभूत्वा देवानुपतिष्ठते ॥ १० ॥**

अत एव सर्वदेवत्यो यूपः । किं च यूपोऽनेकाश्रित्वाद् बहुरूप एव यद् वज्रीभूत्वा वज्रात्मकत्वं प्रतिपद्य देवानुपतिष्ठते ॥ १० ॥

अथ प्रकारान्तरेण यूपमेव प्रशंसति—

**ते देवाः प्रजापतिमुपाधावन् । यूपेन प्रहरन्त्यारोपयन्त्यायोधयन्ति च । तद्यूपस्य यूपत्वम् ॥ ११ ॥**

प्राप्तयूपास्ते देवाः प्रजापतिमुपाधावन् । उपेत्य च ते लब्धानुज्ञाः सन्तः यूपेन वज्रात्मकेन राक्षसान् प्रहरन्ति आरोपयन्ति आवृण्वते च । तथा आयोधयन्ति तैः सह युद्धं कुर्वन्ति । तत् तेन यूपस्य यूपत्वम् ॥ ११ ॥

तत्रैव धर्मान्तरं विधत्ते—

**मूलमरत्निं सत्वचं निखनेत् ॥ १२ ॥**

---

1. T. यूपस्थानि, KM. यूपस्याश्रीः for यूपस्याश्रि०.

2. RI. तासु for ताः; RI om. विदिशस्ते प्रसिद्धा See *CN.*; T. दिश० M. तादृश० for विदिश०.

3. M. ०संख्याः तिष्ठन्ति for ०संख्यमधितिष्ठन्ति ; RI. या दिक् for यस्यां दिशि ; RJMIK. अपराजिता ; for पराजिताः.

5. J. तद्देवत्येभ्यः for तद्देवत्येत्यर्थः.

9. JM. trans. एव after. ०देवत्यः.

12. MT. तद् for ते.

15. JR. आवृण्वन्त्येव for आवृण्वते च.

तस्य मूलं सत्वचम् अरत्निं निखनेत् ॥ १२ ॥

पित्रादिसंबन्धेन यूपं पुनः स्तौति—

**तस्य यन्नैखान्यं तत्पितॄणाम् । यदूर्ध्वं तन्मनुष्याणाम् । यत्तदधो रशनाया ओषधिवनस्पतीनाम् । यदूर्ध्वं रशनायास्तद्विश्वेषां देवानाम् ॥ १३ ॥**

तस्य यूपस्य यन्नैखान्यं निखनसंबन्धि स्थानं तत् पितॄणाम् आश्रयः । यदूर्ध्वं स्थानं तन्मनुष्याणाम् । रशनाया यूपे बद्धाया दर्भमय्या रज्ज्वा अधो यत् स्थानं तत् ओषधिवनस्पतीनाम् । तदधिष्ठातृदेवानामित्यर्थः । रशनाया ऊर्ध्वं यत् स्थानं तद्विश्वेषां देवानाम् । आश्रय इत्यर्थः ॥ १३ ॥

धर्मान्तराणि दर्शयति—

**आप्लावयन्त्यलंकुर्वन्त्यहतेन वसनेनाच्छादयन्ति च ॥ १४ ॥**

यूपम् आप्लावयन्ति अभिषिञ्चेयुः । तथा अलंकुर्वन्ति । किं च । अहतेन वसनेन वस्त्रेण आच्छादयन्ति आच्छादयेयुः ॥ १४ ॥

यथोक्तमाप्लावनादिकं प्रशंसति—

**तद् गन्धर्वाप्सरसाम् ॥ १५ ॥**

तदेतदाप्लावनादि गन्धर्वाणामप्सरसां चार्थे कृतं भवति ॥ १५ ॥

तदीयं चषालं तदूर्ध्वप्रदेशं च इन्द्रादिसंबन्धेन प्रशंसति—

**इन्द्रस्य चषालम् । यदूर्ध्वं चषालस्याङ्गुलमात्रं कार्यं तत्साध्यानां देवानाम् ॥ १६ ॥**

---

1. J. अरत्निप्रमाणं for अरत्निं.
2. M1K. प्रस्तौति for स्तौति.
6. J. adds यन्॰ before निखन.
8. RMIK. om. ओषधिवनस्पतीनां.
9. J. आश्रयम् for आश्रयः.
15. JMK. ॰प्लावनं for ॰प्लावनादि.

तस्य यच्चषालं तद् इन्द्रस्य संबन्धि । चषालस्योर्ध्वं यद् अङ्गुलमात्रं कार्यं तत् साध्याख्यानां देवानां संबन्धि ॥ १६ ॥

सप्रशंसं धर्मान्तरं विधत्ते—

**प्राचीं संनमत्येतद्वै विष्णोः परमं पदम् ॥ १७ ॥**

तं यूपं प्राचीं दिशं प्रति संनमति संनमयेदित्यर्थः । एतद्वै एतदेव प्राचीसंनमनं विष्णोर्देवस्य परमम् उत्कृष्टं पदं स्थानम् ॥ १७ ॥

पुनर्यूपं तदीयशरीरादेर्ऋत्वाद्यात्मकत्वेनोपवर्णनेन प्रशंसति—

**तस्यर्तवः शरीरम् । शिरः संवत्सरः । वेदा रूपाणि । संवत्सर एव प्रतितिष्ठति । य एवं वेद ॥ १८ ॥**

तस्य यूपस्य शरीरं वसन्ताद्यृतवः । शिरः संवत्सरः । वेदाश्च रूपाणि इत्येवं यो वेद स संवत्सर एव प्रतितिष्ठति । दीर्घायुर्भवतीत्यर्थः ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये पञ्चमाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

2. J. साध्यानां for साध्याख्यानां.
5. MK. प्राचीनं for प्राचीं; RMIK. om. संनमति.
7. TJ. ०त्मकत्वोप० for ०त्मकत्वेनोप०.
10. RIT. रूपाणि वेदाश्चेत्येवं, J. रूपाणि वेदाः for वेदाश्च रूपाणि.
11. J, adds एवं after यः; KTM. om. सः.

# पञ्चमः खण्डः

अथ सविशेषां संध्यां प्रश्नपूर्वकमाख्यायिकया निरूपयितुं ब्रह्मवादिनां प्रश्नं तावदुपस्थापयति—

**ब्रह्मवादिनो वदन्ति। कस्माद् ब्राह्मणः सायमासीनः संध्यामुपास्ते? कस्मात् प्रातस्तिष्ठन्? का च संध्या? कश्च संध्यायाः कालः? किं च संध्यायाः संध्यात्वम्? ॥ १ ॥**

अर्थस्त्वातिरोहित एव ॥ १ ॥

उत्तरं वक्तुमुपक्रमते—

**देवाश्चासुराश्चास्पर्धन्त। तेऽसुरा आदित्यमभिद्रवन्। स आदित्यो बिभेत्। तस्य हृदयं कूर्मरूपेणातिष्ठत् ॥ २ ॥**

पुरा देवाश्चासुराश्च परस्परम् अस्पर्धन्त। तत्र ते देवैः सह स्पर्धमाना असुराः दानवाः आदित्यम् अभिलक्ष्य योद्धुम् अभिद्रवन्। तदानीं स आदित्यः तेभ्योऽसुरेभ्यः बिभेत्। अतस्तस्य आदित्यस्य हृदयं कूर्मरूपेण संकुच्यातिष्ठत् इति ॥ २ ॥

ततः किमित्यत्राह—

**स प्रजापतिमुपाधावत्। तस्य प्रजापतिरेतद् भेषजमपश्यत्। ऋतं च सत्यं च ब्रह्म चोंकारं च त्रिपदां च गायत्रीं ब्रह्मणो मुखमपश्यत् ॥ ३ ॥**

---

4. MK. ब्रह्मणः for ब्राह्मणः.

11. J om. परस्परम्.

12. J. अभ्यद्रवन् for अभिद्रवन्.

13. MIK. (अ) सुरेभ्योऽबिभेत् for असुरेभ्यः बिभेत्.

14. RI. संकोच्यादितिष्ठदिति, M. संकुर्यात् अतिष्ठत् तिष्ठति स्म, K. संकुर्यातिष्ठति for संकुच्यातिष्ठत्.

स भीत आदित्यः प्रजापतिमुपाधावत् । तस्य स्वसमीपं प्राप्तस्य असुरजयाय प्रजापतिरेतद् वक्ष्यमाणं भेषजं प्रतीकारम् अपश्यत् । ऋतम् अनृतवर्जनम् । सत्यं यथार्थभाषणम् । ब्रह्म ऋग्वेदादिकम् । ओंकारं प्रणवम् । त्रिपदां पादत्रयवतीं गायत्रीं चेति । किं च । यथोक्तस्य भेषजस्य ब्रह्मणो मुखं प्रधानम् इति अपश्यत् ॥ ३ ॥

अस्त्वेवं किं तत इत्यत्राह—

तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे संध्यामुपास्ते । सज्योतिष्या ज्योतिषो दर्शनात् । सोऽस्याः कालः । सा संध्या । तत् संध्यायाः संध्यात्वम् । यत्सायमासीनः संध्यामुपास्ते तया वीरस्थानं जयति । अथ यदपः प्रयुङ्क्ते ता विप्रुषो वज्रीभवन्ति । ता विप्रुषो वज्रीभूत्वासुरानपाघ्नन्ति । ततो देवा अभवन् । परासुरा भवन्ति । आत्मना परास्य भ्रातृव्यो भवति । य एवं वेद । यत् सायं प्रातश्च संध्यामुपास्ते तया वीरस्थानं स्थानं च संततमविच्छिन्नं भवति । य एवं वेद ॥ ४ ॥

यस्मादेवं तस्माद् । ब्राह्मणः । ब्राह्मणशब्दः क्षत्रियवैश्ययोरप्युपलक्षणम् । तयोरपि तत्राधिकाराद् तन्मुख्यत्वाच्च । अहोरात्रस्य संयोगे । अहोरात्रयोः संधौ । संध्या[म्], संधौ भवा संध्या, ताम्, उपास्ते ।

---

1. IR. om. तस्य; RI. समीपं प्राप्तस्य for स्वसमीपं प्राप्तस्य; J. after तस्य adds संप्राप्तस्य.
2. J. आदित्यस्य रक्षणाय for असुरजयाय.
4. RKTM. पदत्रय० for पादत्रय०.
5. RMIK om. इति.
8. K. सज्योतिषा० for सज्योतिषि.
16. J om. ब्राह्मणः.
17. TRK om. तन्०; T. ०मुखत्वात् for ०मुख्यत्वात्.
18. J om. संध्या[म्] संधौ; J. भव्या for भवा.

सज्योतिषि विनश्यदवस्थापन्नेन पूर्वज्योतिषा सहिते काले आ ज्योतिषो दर्शनात् आगामिनो ज्योतिषो दर्शनपर्यन्तम् अन्तराले यः कालः स एव अस्याः संध्यायाः। अस्य संध्योपासनस्य कालः । सा एव संध्या । तद् एव संध्यायाः संध्यात्वम् । किं च । सायमासीनः उपविष्टः सन्ध्यां यद् उपास्ते तया संध्यया वीरस्थानं बलवत्स्थानं जयति प्राप्नोति । अथ पुनः संध्याकाले अपः उदकानि यत् प्रयुङ्क्ते ऊर्ध्वं विक्षिपति तत्र ता अपां विप्रुषो बिन्दवः वज्रीभवन्ति । वज्रीभूत्वा ता विप्रुषः असुरान् आदित्यं प्रति योद्धुमागतान् अपाघ्नन्ति । ततो देवा विजयिनोऽभवन् । असुरास्तु पराभवन्ति । पराभूता अभवन् । किं च, य एवम् उक्तप्रकारेण वेद अस्य वेदितुः भ्रातृव्यः शत्रुः आत्मना स्वेनैव परा भवति । यथा सायं प्रातश्च संध्यां यदुपास्ते तया द्विविधया संध्यया तस्य वीरस्थानं भवति । तत्र स्थानं संततं सर्वदा अविच्छिन्नं भवति । योऽपि एवं वेद तस्यापि यथोक्तं फलं भवतीत्यर्थः । तथा च तैत्तिरीयका आमनन्ति—तस्मादुत्तिष्ठन्तं ह वा तानि रक्षांसि आदित्यं योधयन्ति । यावदस्तमन्वगात् तानि ह वा एतानि रक्षांसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति । तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्रियाऽभिमन्त्रिता अप ऊर्ध्वं विक्षिपन्ति । ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति (तै. आ. २. २.) ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये पञ्चमाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

1. RTJ. ०वस्थानापन्नेन for ०वस्थापन्नेन ; J. सहितेन कालेन for सहिते काले.

2. R.. ०रालो यः, T. (रा) ह्यः for ०राले यः; MTK om. सः; JTK om. एव अस्याः संध्यायाः.

3. RI om. संध्योपासनस्य.

6. RTI. विक्षिपन्ति, M. विक्षिताः for विक्षिपति; J. ऊर्ध्वं for अपां.

10. RI. यत्, J. तथा for यथा.

11. J om. भवति । तत्र स्थानं.

15. R. गायत्र्या, T. गायत्र्य० for गायत्रिया.

16. MTIK. गायत्र्या for गायत्रिया; RMTIK. आप for अप

# षष्ठः खण्डः

अथ चन्द्रस्य क्षयवृद्धी निरूपयितुं प्रतिजानीते—

**अथैषा चन्द्रमसः क्षयवृद्धिर्भवति। यदा वै चन्द्रमाः क्षीयते चाप्यायते च तदनुव्याख्यास्यामः ॥ १ ॥**

अथ इति वाक्योपक्रमे। एषा वक्ष्यमाणा चन्द्रमसः संबन्धिनी क्षयवृद्धिः। क्षयश्च वृद्धिश्च। यद्यपि द्विवचनेन भाव्यं, तथापि बाहुलकादेकवचनम्। तस्यैव विवरणम्। यदा वै यस्मिन्नेव काले चन्द्रमाः क्षीयते कलाभिः, यदा कलाभिः आप्यायते च तद् वयम् अनुव्याख्यास्यामः। अनुवर्णयाम इति ॥ १ ॥

तत्र प्रथमं तस्य क्षयप्रकारं दर्शयति—

**पूर्वपक्षे वै देवा दीक्षन्ते। तेऽपरपक्षे सोमं भक्षयन्ति। तत्रेमानि त्रीणि पात्राण्युपधीयन्ते। पृथिवी पात्रमन्तरिक्षं पात्रं द्यौः पात्रमिति। तं देवा दिव्येन पात्रेण आदित्याः प्रथमं पञ्चकलं पञ्चमीं भक्षयन्ति। अन्तरिक्षेण पात्रेण रुद्रा द्वितीयं पञ्चकलं दशमीं भक्षयन्ति। ते पृथिव्या पात्रेण वसवस्तृतीयं पञ्चकलं पञ्चदशीं भक्षयन्ति। षोडशी कलावशिष्यते। षोडशकलो वै चन्द्रमाः। स ओषधीश्च वनस्पतींश्च गाश्च पशूंश्चादित्यं च ब्रह्म च ब्राह्मणांश्चानुप्रविशति। तं देवा इन्द्रज्येष्ठाः सोमपाश्चासोमपाश्च यथा पितरं पितामहं प्रपितामहं वा वृद्धं**

---

6. JT. भवितव्यं for भाव्यं.
7. MTK. चन्द्रः for चन्द्रमाः.

प्रलयमुपगच्छमानं व्याधिगतं मरिष्यतीति वा तां रात्रिं वसन्ते । तदमावास्याया अमावास्यात्वम् । तस्मादमावास्यायां नाध्येतव्यं भवति ॥ २ ॥

य एवं देवाः पूर्वपक्षे शुक्लपक्षे दीक्षन्ते सोमपानाय दीक्षां कुर्वन्ति ते दीक्षिता देवा अपरपक्षे कृष्णपक्षे सोमं भक्षयन्ति । कथम्? तत्र सोमपानविषये इमानि वक्ष्यमाणानि त्रीणि पात्राणि उपधीयन्ते । तेषामेव प्रदर्शनम् । पृथिवी परिदृश्यमानः पृथिवीलोक एकं पात्रम् । अन्तरिक्षम् अन्तरिक्षलोक एकं पात्रम् । द्यौः द्युलोक एकं पात्रम् इति । तत्र आदित्या आदित्याख्या देवा दिव्येन द्युलोकात्मकेन पात्रेण प्रथमं त्रेधा विभागेनाद्यविभागात्मकं पञ्चकलं, पञ्च कला यस्य तं सोमं, पञ्चमीम् । अत्यन्तसंयोगे द्वितीया । प्रतिपदमारभ्य पञ्चमीपर्यन्तं भक्षयन्ति । प्रतिदिनम् एकैकां कलां पिबन्तीत्यर्थः । ततस्ते दीक्षिता [रुद्राः] रुद्राख्या देवा अन्तरिक्षेण अन्तरिक्षलोकात्मकेन पात्रेण द्वितीयं पञ्चकलं सोमं दशमीं षष्ठीमारभ्य दशमीपर्यन्तं भक्षयन्ति । ततस्ते दीक्षिता वसवो वस्वाख्या देवाः पृथिव्या पात्रेण तृतीयं तृतीयभागात्मकं पञ्चकलं सोमं पञ्चदशीं पञ्चदशीपर्यन्तं पूर्ववद् भक्षयन्ति । ततश्चन्द्रमसः षोडशी एका कला अवशिष्यते । यतः चन्द्रमाः षोडशकलः । अनन्तरं सः अवशिष्टैककलः सोम ओषध्यादीन् प्रविशति । तथा च सति इन्द्रज्येष्ठा इन्द्रप्रमुखाः सोमपाश्च असोमपाश्च सर्वे देवाः तं सोमम् अभिलक्ष्य तादृशसोमवतीं रात्रिं वसन्ते । तत्र दृष्टान्तः । यथा पितरम् इत्यादि । वृद्धं जरया प्रलयं नाशम् उपगच्छमानम् उपगच्छन्तं व्याधिगतं रोगिणं पितरं

---

7. RI. om. प्रदर्शनम् ; MTK. लोकं प्रदर्शनं for परिदृश्यमानः.

8. RTIK om. अन्तरिक्षलोकः, JRMTIK. अन्तरिक्षलोकं for अन्तरिक्षलोकः.

9. RMIK om. आदित्या.

10. R. om. पञ्चकलं.

11. JT. ०पदात् for ०पदम.

12. RTMK om. देवा.

13 M om. अन्तरिक्षेण.

16. J om. पञ्चदशीं; M. adds दशमीमारभ्य after पञ्चदशीं.

20. T. adds वसन्ति after वसन्ते; JT. add यथा before वृद्धं.

पितामहं प्रपितामहं वाभिलक्ष्य मरिष्यति न वेति संदिहानाः पुत्रादयः तां रात्रिं वसन्ति तद्वदित्यर्थः । तत् तेन सहवासनिमित्तेन अमावास्याया अमावास्यात्वम् । अमा सह वसत्यस्यामिति व्युत्पत्तेरित्यर्थः । यस्मादेवं तस्माद् एव खलु अमावास्यायां न किंचिदप्यध्येतव्यं भवति । अध्येतव्यस्य वर्णात्मकस्य वेदराशेरग्निष्टोमात्मकत्वात् तत्र च सोमस्यादर्शनादित्यर्थः ॥ २ ॥

अथास्य वृद्धिप्रकारं प्रतिज्ञापूर्वकं दर्शयति—

**अथ संभरणम् । तमोषधीभ्यश्च वनस्पतिभ्यश्च गोभ्यश्च पशुभ्यश्चादित्याच्च ब्रह्मणश्च ब्राह्मणाः संनयन्ते । तस्मात्सांनाय्यस्य सांनाय्यत्वम् ॥ ३ ॥**

अथ क्षयप्रदर्शनानन्तरं संभरणं चन्द्रमसः कलाभिः पोषणम् उच्यत इति शेषः । यत्र चन्द्रकला चानुपूर्वमनुप्रविष्टा तां तेभ्यः [संभरन्ति] । कथम्? ओषधीभ्यो वनस्पतिभ्यश्च । अपुष्पाः फलवन्तो वनस्पतयस्तेभ्यश्च । गोभ्यः पशुभ्यश्च आदित्याच्च ब्रह्मणश्च । ब्रह्म मन्त्राद्यात्मको वेदः, तस्माद् । ब्राह्मणास्तम् एतेषूषितं चन्द्रमसं संनयन्ते सम्यङ्नयन्ति । यस्मादेवं तस्मात् सांनाय्यस्य संनयनसंबन्धिनश्चन्द्रमसः सांनाय्यत्वम् । यथा पशुभिरोषधीभ्यश्च

---

2. J. adds देवानां after तेन.

3. J. अमाशब्दः सहार्थे संवसन्ति for अमा सह वसति; T. वसन्ति for वसति.

5. R. पुण्यात्मकस्य for वर्णात्मकस्य ; J. वेदादे० for वेदराशे०.

6. RKT. ०पूर्वं for पूर्वकं.

11. RI. कथं यत्र चन्द्रमाश्चानुपूर्वमनुप्रतिष्ठितम । तेभ्यस्तु यत्र...कथम् ? for चन्द्रकाला...कथम् ? See CN. ; MK. चन्द्रकः for चन्द्रकला; M. अनुपूर्वशस्तेषु for अनुपूर्वमनु०; J पूर्वम् for अनुपूर्वम्; M. ०प्रतिष्ठितेस्तम, K. ०प्रतिष्ठाताम for प्रविष्टा तां तेभ्यः; KM. om. कथम्.

12. J om. च after वनस्पतिभ्यः

13. MIK om. तस्माद्.

14. RIJ. ०श्च स्वेन तोषितं, K. ०श्च स्वोदतोषितं, M. ०श्च स्विदेतेषूषितं for ०स्तमेतेषूषितं. *See CN;* MK. संपद्यन्ते for संनयन्ते.

15. RI om. संनयन...०मसः ; M. संनाय्य for संनयन० ; M. ओषधीभिश्च for ओषधीभ्यश्च.

संनीय वपात्मनि (ना ?), संनयनाद् दधिपयसोः सांनाय्यत्वम् । तथा च तैत्तिरीया आमनन्ति—एतदस्मै संनयतेति । तत्पशव ओषधीभ्योऽध्यात्मन्त्समनयन् । तत्प्रत्यदुहन् । यत्समनयन् तत्सांनाय्यस्य सांनाय्यत्वम् । (तै. सं. २. ५. ३. ३) इति । एवमत्रापीत्यर्थः ॥ ३ ॥

अथेदानीमनुमत्यादिपतित्वेन चन्द्रमसं प्रशंसति—

**चन्द्रमा वै धाता । या पूर्वा पौर्णमासी सानुमतिः । योत्तरा सा राका । या पूर्वामावास्या सा सिनीवाली । योत्तरा सा कुहूः । योऽनु पश्यत्यन्यं न पश्यति तन्मिथुनमेवास्य भवति ॥ ४ ॥**

चन्द्रमा एव धाता पतिरनुमत्यादीनाम् । रेतस आधानात् आधृतत्वात् । अनुमत्यादीनां स्वरूपदर्शनम् । या पूर्वा चतुर्दशीविद्धा पौर्णमासी सानुमतिरित्युच्यते । योत्तरा संपूर्णचन्द्रोपेता सा राका । या पूर्वा दृष्टचन्द्रा अमावास्या सा सिनीवाली इति अभिधीयते । योत्तरा नष्टेन्दुकला अमावास्या सा कुहूः इत्युच्यते । एताश्चन्द्रमसो जाया इत्यर्थः । अतो यः पुमान् बुद्धिम् अनु तं चन्द्रमसं पश्यति अन्यं न पश्यति अस्य द्रष्टुः तत् तादृशमेव मिथुनं भवति ॥ ४ ॥

अनुमत्यादिपर्वचतुष्टयं युगचतुष्टयसंबधित्वेन प्रशंसति—

---

1. J. स्वात्मनि, M. वात्मानं for वपात्मानं (ना ?).

2. RIK. एतस्मिन् MT. एतस्मै for एतदस्मै.

10. J. om. आधानात्, RJI. अधृतत्वात्, M. आधारात् for आधृतत्वात्.

12. M. संपूर्णा for संपूर्ण० ; RI. ०चन्द्रमसो० for चन्द्रो० ; RI. दृष्टा चन्द्रमा for दृष्टचन्द्रा.

15. RI. बृद्धिमनुमतं for बुद्धिमनु तं; M. बुद्धिमान for बुद्धिमनु ; M om. तं; JMK. चन्द्रं for चन्द्रमसं.

17. MK. अनुमत्याः for अनुमत्यादि० ; I. ०पूर्व० for ०पर्व० ; RI. चतुष्टय० for चतुष्टयं; RITMK. om. युगचतुष्टय०.

पुष्ये चानुमतिर्ज्ञेया सिनीवाली तु द्वापरे ।
खार्वायां तु भवेद्राका कृतपर्वे कुहूर्भवेत् ॥ ५ ॥

पुष्ये । पुष्यत्यस्मिन् अधर्मः शीघ्रमिति पुष्ये कलियुगे अनुमतिः श्रेष्ठेति ज्ञेया । तथा द्वापरे सिनीवाली श्रेष्ठा । खार्वायाम् । खर्वौ समौ धर्माधर्मौ यस्यां त्रेतायां सा खार्वा । तस्यां राका श्रेष्ठा भवेत् । तथा कुहूः कृतपर्वे कृतयुगसंबन्धि पर्व । [तस्मिन्] भवेदिति ॥ ५ ॥

अनुमत्यादीनां लक्षणमाह—

न्यूने चानुमतिं विद्यात् । यस्मिन् दृश्येत सा सिनीवाली । राका यदि संपूर्णः । चन्द्रस्तु कुहूर्न दृश्येत ॥ ६ ॥

न्यूने चन्द्रे कलाहीने सति पौर्णमासीम् अनुमतिं विद्यात् । यस्मिन् दर्शे चन्द्रमा दृश्येत सा अमावास्या सिनीवालीति ज्ञेया । यदि चन्द्रमाः संपूर्णः दृश्येत सा पौर्णमासी राका । यत्र तु चन्द्रो न दृश्येत सा अमावास्या कुहूरिति ज्ञेया ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे पञ्चमाध्याये षष्ठः खण्डः ॥ ६ ॥

---

1. ShMs. वालीति for ०वाली तु.
2. Ms. ०पूर्वे for ०पर्वे; T. कृते पर्व for कृतपर्वे.
3. JM. om. first पुष्ये ; J. पुष्यन्ति अस्मिन् अधर्माः for पुष्यति अस्मिन् अधर्मः; M. धर्मे, TKI. धर्मः for अधर्मः.
4. RJ. add भवति after श्रेष्ठा.
5. TBh K. खर्वा for खार्वा ; RK. ०पर्व, M. ०पर्वा for ०पर्वे.
6. M. ०संबन्धपर्वा for ०संबन्धि पर्व.
7. J. लक्षणानि दर्शयति for लक्षणमाह.
9. RJ. राकायां, Bh. राका यस्तु for राका यदि.
10. T. दृश्यते for दृश्येत.
11. TJ. ०रहिते ०हीने.
12. Bh. देशे for दर्शे; RK. दृश्यते for दृश्येत; RK om. इति.
13. RBh JK. दृश्यते for दृश्येत ; Bh T. चन्द्रमा० for चन्द्रो०.

## सप्तमः खण्डः

अथ स्वाहाख्यां देवतां प्रश्नपूर्वकं निरूपयितुं प्रजापतिं प्रति ब्रह्मवादिनां प्रश्नं तावदुपस्थापयति—

स्वाहा वै कुतः संभूता? कस्य दुहिता? केन प्रकृता? किंगोत्रा? कत्यक्षरा? कतिपदा? कतिमात्रा? कतिवर्णा? कत्युच्छ्वासा? किं चास्याः शरीरम्? कान्यङ्गानि? कानि लोमानि? कति शिरांसि? कति वा चक्षूंषि? किमस्या आस्यम्? किंप्रावृता? कौ बाहू? कौ पादौ? क च स्थिता? किमधिष्ठाना? कथं च स्वाहां प्रति गृह्णासि? ब्रूहि स्वाहारूपं च दैवतं च ॥ १ ॥

निगदसिद्धमेतत् ॥ १ ॥

उत्तरमाह—

स्वाहा वै सत्यसंभूता । ब्रह्मणो दुहिता । ब्रह्मप्रकृता । लातव्यसगोत्रा । त्रीण्यक्षराणि । एकं पदम् । त्रयोऽस्यै वर्णाः । शुक्लः पद्मः सुवर्ण इति । चत्वारोऽस्यै वेदाः शरीरम् । षडङ्गान्यङ्गानि । ओषधिवनस्पतयो लोमानि । द्वे चास्याः शिरसी । एकं शिरोऽमावास्या द्वितीयं पौर्णमासी । चक्षुश्चन्द्रादित्यौ । आज्यभागौ हुतम् । दक्षिणा प्रावृता । बृहद्रथन्तरम् । ऋग्यजुःसाम गतिः । सा स्वाहा । सा स्वधा । स वषट्कारः । सैषा देवेषु वषट्कारभूता प्रयुज्यते । पितृयज्ञेषु स्वधाभूता । शकटीमुखीं

**पृथिवीमन्तरिक्षेणं विपर्येति । तस्या अग्निर्दैवतम् । ब्राह्मणो रूपम् । यत्कामास्ते जुहुमस्तन्नो अस्तु । वयं स्याम पतयो रयीणाम् । स्वाहेति ॥ २ ॥**

स्वाहा सत्येनैव संभूता । नान्येन । ब्रह्मण एव दुहिता ब्रह्मणैव प्रकर्षेण कृता । लातव्येन ऋषिणा समानगोत्रा । तस्या अक्षराणि सकार-वकारहकारात्मकानि त्रीणि । पदमेकम् । एतावत्येवेति मन्तव्यम् । अस्यै अस्याः वर्णरूपाणि शुक्लः पद्मः,—पद्मशब्देन पद्मवर्ण उपलक्ष्यते,—[सुवर्णः] सुवर्णवर्णश्चेति त्रयः । अस्याश्चत्वार ऋगादयो वेदाः उच्छ्वासाः त एव तस्याः शरीरम् । अङ्गानि निरुक्तादीनि षड् वेदाङ्गानि । तान्येव तस्या अङ्गानि । ओषधिवनस्पतय एवास्या लोमानि । तथा अस्या द्वे शिरसी । तयोरेव प्रदर्शनम् । अमावास्यैकं शिरः । पौर्णमासी द्वितीयं शिरः । तत्रैव यागकरणात् । चन्द्रादित्यौ एव अस्याश्चक्षुः । चक्षुषी इत्यर्थः । आज्यभागाख्ये कर्मणी एव अस्या हुतं हवनस्थानम् । मुखमित्यर्थः । यागे या दक्षिणा सैव प्रावृतावरणं तस्याः । बृहद्रथन्तरं बृहद्रथ-न्तरसामनी एव बाहू इति शेषः । ऋग्यजुःसाम । ऋगादयस्त्रयो वेदा गतिः । पादा इत्यर्थः । एवंविधा या स्वाहा सैव स्वधा । नान्या । तथा सः वषट्कारः । सैषा स्वाहा देवेषु देवयज्ञेषु

---

4. Bh om. ब्रह्मणैव ; JT om. एव.

6. BhK. पितावत्येव, M. मात्रा पित्रा यत्येव for एतावत्येव.

7. Bh RIK. add. पद्मवर्णः (M. ०वर्णे) after पद्मः; M. पद्मं for पद्मः; M. om. पद्मवर्ण.

8. Bh I. उच्छ्वासः for उच्छ्वासाः; RBhMIK. om. त०; BhMK. om. एव तस्याः

9. R. तस्य for तस्या०.

10. RBhK. अस्य for अस्या०.

11. RI एकं for द्वितीयं.

12. BhTK. चन्द्रमा० for चन्द्रा०; RBh TIK add चन्द्रादित्यौ after ०दित्यौ.

13. MK. मुख्यम् for मुखम्.

14. RBhMKTI om. बृहद्रथन्तरं ; RJI. बृहद्रथन्तरे for बृहद्रथन्तर०

15. J. adds वेदाख्यः उच्छ्वासः after साम; RKMI. ०सामादयः for ०साम । ऋगादयः.

वषट्कारभूता सती प्रयुज्यते । सैव स्वधाभूता पितृयज्ञेषु प्रयुज्यते इत्याश्रयनिरूपणम् । शकटीमुखीं पृथिवीम् अधिष्ठाय अन्तरिक्षेण [अन्तरिक्ष]मार्गेण विपर्येति । स्वाहा सर्वं स्वर्गादिफलं प्राप्नोतीति [अर्थः] । तस्याः स्वाहाया अग्निर्दैवतं अग्निरेव देवता । रूपं ब्राह्मणः । तत्प्राधान्यात् । हे प्रजापते ! त्वत्तोऽन्यः कश्चित् सर्वाणि भुवनानि परिभवितुं न शक्नोति । अतस्ते तुभ्यं वयं यत्कामा यत्फलं कामयमानाः जुहुम तत् फलं नोऽस्माकम् अस्तु । किं च । वयं रयीणां धनानां पतयः स्याम भवेम । स्वाहेत्यनेन स्वाहायाः प्रजापतिपरिग्रहो दर्शितः ॥ २ ॥

यथोक्तरूपां स्वाहां प्रशंसति—

**तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ ३ ॥**

तस्य स्वाहाकारपरिग्रहेण तृप्तस्य प्रजापतेः तृप्तिमनु यजमानः प्रजया पुत्रपौत्रादिकया पशुभिः गवादिभिः अन्नाद्येन तेजसा ब्रह्मवर्चसेन,—[ब्रह्मवर्चसं] वृत्तस्वाध्यायतेजः तेन,—च तृप्यति । इतिशब्दोऽध्यायपरिसमाप्तिद्योतनार्थः ॥ ३ ॥

इति षड्विंशब्राह्मणे पञ्चमाध्याये
सप्तमः खण्डः ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे सव्याख्याने पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

2. Bh J. ०इत्याशय० for इत्याश्रय०; MTK. ०मुख for ०मुखीं.
3. Bh. ०पर्ययेति, M. ०पर्यस्येति for विपर्येति.
4. RIK. om. अग्निर्दैवतं; M. देवता for दैवतं.
7. T. धर्माणां for धनानां.
12. RI. स्वाहा० for स्वाहाकार०.
14. JMKT om. वृत्तस्वाध्यायतेजः तेन च.
22. R. ब्राह्मणव्याख्याने, K. ०ब्राह्मणे व्याख्यायां for ०ब्राह्मणे सव्याख्याने; K. after Colophon adds षड्विंशब्राह्मण(व्याख्यान)स्समाप्तः ॥ श्रीगणेशाय नमः ॥ This ms. concludes here.

षष्ठोऽध्यायः

## प्रथमः खण्डः

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ षष्ठाध्याये अद्भुतशान्तिर्निरूप्यते । तत्र प्रथमं तां सविशेषां दर्शयितुं प्रतिजानीते—

**अथातोऽद्भुतानां कर्मणां शान्तिं व्याख्यास्यामः ॥ १ ॥**

अथ इष्टप्राप्तिसाधनकर्मनिरूपणानन्तरम् अतः अनिष्टपरिहारसाधनकर्मनिरूपणस्य प्रस्तुतत्वात् अद्भुतानां दैविकानाम् अनिष्टप्राप्तिसूचकानां कर्मणां तत्सूचितदोषनिर्हरणसाधनात्मिकां शान्तिं व्याख्यास्यामः । विशेषेणानुवर्णयामः ॥ १ ॥

प्रतिज्ञातां शान्तिं विधत्ते—

**पालाशानां समिधामष्टसहस्रं जुहुयात् ॥ २ ॥**

पालाशसमिद्भिः अष्टसहस्रम् अष्टोत्तरसहस्रं जुहुयात् ॥ २ ॥

---

5. RI. add अनेकधा before तत्र; RJI. om. तां; K. ०शेषं for शेषां; J. adds शान्तिं after ०शेषां.

9. M. अनिष्टप्राप्तिसूचकाद्भुतदर्शनानन्तरं यतः शान्तिं विना नोपपद्यते अतः for इष्टप्राप्ति...प्रस्तुतत्वात्; R. om. अतः.

10. J. प्रस्तुतस्य for प्रस्तुतत्वात्; M. om. दैविकानामनिष्टप्राप्तिसूचकानां

11. RI. तत्तत् for तत; JT. साधनात्मकं for साधनात्मिकां; JMT. om. शान्तिं.

15. TM. पलाश० for पालाश; R. adds:-इत्यर्थः after जुहुयात्.

तत्र देवताप्रकाशकान् मन्त्रान् दर्शयति—

**ऐन्द्र-याम्य-वारुण-धानद-आग्नेय-वायव्य-सौम्य-वैष्णव्ये-त्यष्टौ ॥ ३ ॥**

ऐन्द्रः इन्द्रदेवत्यः । सर्वेऽपि देवतावाचकाः शब्दाः तद्धितान्ताः । ऐन्द्रादयो वैष्णव्यान्ता अष्टावृचः । ताभिर्जुहुयात् इत्यर्थः ॥ ३ ॥

ता एव ऋचः प्रतीकैर्दर्शयति—

**इन्द्रायेन्दो मरुत्वते (सा. ४६२), नाके सुपर्णमुप यत्पतन्तम् (सा. ३२०), घृतवती भुवनानाम् (सा. ३७८), अभि त्यं देवं सवितारमोण्योः (सा. ४६४), अग्निं दूतं वृणीमहे (सा. ३), वात आ वातु भेषजम् (सा. १८४), सोमं राजानं वरुणम् (सा. ९१) इदं विष्णुर्विचक्रमे (सा. २२२) इति ॥ ४ ॥**

एता ऋचः छन्दोग्रन्थव्याख्याने स्पष्टमस्माभिर्व्याख्याता इत्यत्र न व्याक्रियन्ते ॥ ४ ॥

यथोक्तमन्त्रैर्होमं दर्शयित्वा इदनीं तदङ्गत्वेन तेषामेव स्वस्तिवाचनं दर्शयति—

**एतानि सामप्रभृत्यष्टशतं जपित्वा स्वस्ति वाचयित्वा स्वस्ति हैषां भवति ॥ ५ ॥**

एतानि यथोक्तानि मन्त्रवाक्यानि सामप्रभृति सामगानपुरःसरम् अष्टशतम् अष्टोत्तरशतं प्रत्येकं जपित्वा स्वस्ति वाचयित्वा पुण्याहवाचनं

---

1. M. ०प्रकाशक० for ०प्रकाशकान्.
2. RM. वैष्णवे० for वैष्णव्ये०
4. RI. सर्वो for सर्वेऽ० ; JM. देवाः, for देवतावाचकाः शब्दाः; RI. शब्दस्तद्धितान्तः for शब्दास्तद्धितान्ताः.
6. M. ता वा एता for ता एव ; M. प्रतीकेन for प्रतीकैः.
13. M. om. एता...व्याक्रियन्ते ॥...दर्शयति—.
19. M. om. ०गान०.

कुर्यादित्यर्थः । तथा च सति एषां यजमानानां स्वस्ति अनिष्टपरिहारद्वारेण मङ्गलं भवत्येव ॥ ५ ॥

स्वस्तिवाचनमन्त्रान् प्रतीकैः दर्शयति—

**स्वस्तिदा विशस्पतिः (ऋ. वे. १०.१५२.२) स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं (ऋ. वे. खि. २.४.१) त्यमूषु वाजिनं देवजूतम् (ऋ. वे १०.१७८.१) आयुर्विश्वायुः (ऋ. वे. १०.१७.४) शतं जीव शरदो वर्धमान (ऋ. वे. १०.१६१.४) इति ॥ ६ ॥**

एते मन्त्रा उत्तराग्रन्थे स्पष्टमस्माभिः व्याख्याताः ॥ ६ ॥

स्वस्तिवाचनमन्त्राणां होमसंभारोपस्थाने विनियोगं दर्शयति—

**एतैः संभाराणामुपस्थापनं कृत्वा स्वस्ति वाचयित्वा स्वस्ति हास्य भवति । स्वस्ति हास्य भवति ॥ ७ ॥**

एतैः स्वस्तिदाविशस्पतिरित्याद्यैर्मन्त्रैः संभाराणामुपस्थानं कृत्वा शेषं कर्म समापयेदित्यर्थः । तथा च सति अस्य यजमानस्य स्वस्ति मङ्गलं भवत्येव । द्विरुक्तिरादरार्था । शान्तिप्रशंसार्था च । लिङ्गादन्यत्र विनियुक्तानामप्येषां मन्त्राणां श्रुत्या संभारोपस्थाने विनियोगः । यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठते (?) इति श्रुत्या ऐन्द्र्या ऋचो गार्हपत्योपस्थाने विनियोगः ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे षष्ठाध्याये प्रथमः खण्डः ॥ १ ॥

---

1. RI. om. तथा च सति; RI. हैषां for एषां.
3. MT. ०वाचने for ०वाचन०; MJT. add. एव after दर्शयति.
9. MTI. om. अस्माभिः; M. समाख्याताः for व्याख्याताः.
10. M. ०वाचनं for ०वाचन०.
11. M. om. स्वस्ति वाचयित्वा.
15. अर्थाल्लिङ्गाद् for ०(अ)र्था च । लिङ्गाद्.
16. RI. एतेषां for एषां; M. adds एव after श्रुत्या
18. RI. add ऐन्द्र्यास्तद्वत् after विनियोगः.

# द्वितीयः खण्डः

अथ प्रसङ्गाच्छत्रुकृतोपद्रवे प्राप्ते शत्रुविजयार्थं होमविशेषमाख्यायिका-पुरःसरं दर्शयितुमुपक्रमते—

**देवाश्च वा असुराश्चैषु लोकेष्वस्पर्धन्त । ते देवाः प्रजापतिमुपाधावन् । तेभ्य एतां दैवीं शान्तिं प्रायच्छत् ॥ १ ॥**

एषु लोकेषु पृथिव्यादिलोकविषये देवाश्चासुराश्च परस्परम् अस्पर्धन्त । असुरेभ्यः स्पर्धमाना देवाः प्रजापतिमुपाधावन् । ततः प्रजापतिस्तेभ्य उपसन्नेभ्यो देवेभ्य एतां वक्ष्यमाणां दैवीं देवसंबन्धिनीं शान्तिं शत्रुकृतोपद्रव-निर्हरणसाधनभूतां प्रायच्छदिति ॥ १ ॥

ततः किमित्यत्राह—

**ते ततः शान्तीका असुरानभ्यजयंस्ततो देवा अभवन् । परासुरा भवत्यात्मना परास्य भ्रातृव्यो भवति । य एवं वेद ॥ २ ॥**

ततः अनन्तरं ते देवाः शान्तीकाः । प्रहरणार्थे शक्तियष्टयोरीकक् (पा. ४.४.५९) इति विहित ईकक्प्रत्ययो बाहुलकाच्छान्तेरपि भवति । तेन प्रजापतिदर्शितशान्तिहोमायुधाः सन्तः असुरानभ्यजयन् ।

---

2. J. अतः सप्रशंसं for अथ प्रसङ्गात्; T. प्रशंसना for प्रसङ्गात्.

7. M. om. एषु...देवसंबन्धिनीं (L.9.); RI. om. परस्परम्.

12. MT. एते अतः for ते ततः; MTSh. शान्तिका for शान्तीका.

15. JMT. अतः for ततः; J. एव, MT. एते for ते; RJMT. शान्तिकाः for शान्तीकाः.

17. T. ॰युधकाः for ॰युधाः; RI. om. असुरानभ्यजयन्; T. ॰जयन्त for ॰जयन्.

ततो देवाः शत्रुकृतोपद्रवरहिता अभवन् । असुरास्तु पराभूता आसन् । किं च, य एवमुक्तप्रकारेण वेद तस्यास्य भ्रातृव्यः शत्रुः आत्मना स्वेनैव पराभवति ॥ २ ॥

यदर्थमाख्यायिका दर्शिता तं होमं सेतिकर्तव्यताकं दर्शयति—

**अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा दर्भाञ्छमीं वीरणान् दधि सर्पिः सर्षपान् फलवतीमपामर्गं शिरीषमित्येतान्याहरेदाहारयेद्वा स्नातः प्रयतः शुचिः शुचिवासाः स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्याग्निमुपसमाधाय नित्यतन्त्रेणौदनकृसरयवागूरक्तपायसदधिक्षीरघृतपायसघृतामिति घृतोत्तराः पृथक् चरवः सर्वे । सर्वेषां वा पायसः ॥ ३ ॥**

अथशब्दो वाक्योपक्रमे । पूर्वाह्ण एव प्रातः [आहुतिं] नैत्यकाग्निहोत्रहोमं हुत्वा वीरणान् तत्संज्ञकान् तृणविशेषान् । फलवतीं प्रियङ्गुम् । अन्यत् प्रसिद्धम् । इत्येतानि दर्भादीनि संभारद्रव्याणि स्वयमेव आहरेद् यजमानः । पुत्रादिना वा आहारयेत् । आहृत्य च तानि स्नातः प्रयतः वाग्यतः शुचिः सन् शुद्धवासाः नित्यतन्त्रेण नैत्यकेन तन्त्रेण स्थण्डिलमुपलिप्य गोमयेन । तत्स्थण्डिलम् अद्भिः प्रोक्ष्य । लक्षणं स्वशाखोक्तविधिमनतिक्रम्य दर्भैः स्थण्डिलम् उल्लिख्य पुनरद्भिः अभ्युक्ष्य

---

1. RIT ते for ततो.
2. J. om. तस्य.
12. J. om. प्रातः; TKM. नित्यकर्म for नैत्यक.
13. JMT. ०होत्रं for ०होत्रहोमं; J. ०संज्ञान् for संज्ञकान्; RI. फलवती for फलवतीं.
14. RI. प्रिङ्गुः, J. प्रियङ्गुकां for प्रियङ्गुं; J. अपामार्गं for अन्यत्.
16. KI. शुक्लवाससा for शुद्धवासाः; J. om. नैत्यकेन तन्त्रेण.
17. J. om. लक्षणं.
18. RMI. om. अद्भिः; M. प्रोक्ष्य for अभ्युक्ष्य.

अग्निमुपसमाधाय, इन्द्रायेन्दो मरुत्वते (सा. ४७२) इत्याद्यैरिन्द्रादिदेवत्यैरष्टभिः पूर्वोक्तैर्मन्त्रैर्वक्ष्यमाणैर्द्रव्यैः इन्द्रादीनुद्दिश्य प्रत्येकमष्टोत्तरशतं जुहुयादिति शेषः । द्रव्याणां प्रदर्शनम्—ओदनेत्यादि । कृसरं मुद्गादिमिश्रैस्तण्डुलैः पक्वमन्नम् । रक्तपायसं रक्तशालितण्डुलैः पक्वं पायसम् । घृतपायसं घृतमिश्रेण क्षीरेण पक्वं पायसम् । अन्यत् प्रसिद्धम् । एते सर्वे ओदनादयो द्रव्यविशेषाः पृथक् घृतोत्तराः चरवः । एतेषामलाभे घृतोत्तराश्चरव एव ग्राह्या इत्यर्थः । अथवा, सर्वेषां तेषामलाभे पायसः परमान्नमेव ग्राह्यमित्यर्थः ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये षष्ठाध्याये द्वितीयः खण्डः ॥ २ ॥

---

2. M. वीक्ष्यमाणैः RI. वक्ष्यमाण० for वक्ष्यमाणैः.

3. JMT. om. ओदनेत्यादि; M. कृसर० for कृसरं.

4. RI. रक्तपायसः for रक्तपायसं; M. आरक्तशालि० for रक्तशालि०; RI. अन्नम् for पायसम्.

5. M. नीरेण for क्षीरेण; J. adds एव after क्षीरेण.

6. RI. add:—ओदनादीनाम् after एतेषाम्; J. अभावे for अलाभे MJT. om. एव.

## तृतीयः खण्डः

इदानीमैन्द्राद्भुतविशेषे होमविशेषं दर्शयितुं तदङ्गत्वेन कंचिन्नियमं तावद्दर्शयति—

**स प्राचीं दिशमन्वावर्तते ॥ १ ॥**

सः वक्ष्यमाणाद्भुतविशेषनिमित्तवान् प्राचीं दिशम् अन्वीक्ष्य आवर्तते होमकरणार्थं प्रवर्तते । वक्ष्यमाणानामद्भुतविशेषाणां प्राच्या दिशोऽपि इन्द्रादिसंबन्धित्वाविशेषात् ॥ १ ॥

इदानीं निमित्तविशेषान् दर्शयति—

**अथ यदास्य मणिमणिककुम्भस्थालीदरणमायासो राजकुलविवादो वा यानच्छत्रशय्यासनावसथध्वजपताका-गृहैकदेशप्रभञ्जनेषु गजवाजिमुख्या वाप्रमीयाः प्रमीयन्त इत्येवमादीनि तान्येतानि सर्वाणीन्द्रदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ॥ २ ॥**

अथ पुनः यदास्य पुरुषस्य संबन्धिनां मणिः हारादिसंबद्धः । तदादीनां दरणं भेदनम् । आयासः चित्तपीडा । अथवा राजकुलेन सह

---

2. J. om. विशेषे होम०; TM. ०विशेष० for ०विशेषे; J. नियमान्तरं for नियमं तावद्.

5. M. वीक्ष्यमाण० वक्ष्यमाण०

6. J. प्रवर्तेत for प्रवर्तते.

8. RJI. om. इदानीं; MT. विशेषणां for विशेषान्.

9. M. ०माणिक्य०, T. ०माणिक्क० for ०मणिक०

10. M. om. ०पताका०

14. RMTI. ०संबन्धः for ०संबद्धः.

विवादो भवेत् । तथा यानम् आन्दोलिका । तदादीनां भञ्जनेषु । तेषु भग्नेष्वित्यर्थः । अपि वा, गजवाजिप्रभृतयः अप्रमीयाः प्रमापणायोग्याः यदि प्रमीयन्ते । इत्येवमादीनि हारादिभञ्जनादीनि तान्येतानि सर्वाणि अद्भुतानि इन्द्रदेवत्यानि प्रायश्चित्तानि प्रायश्चित्तनिमित्तानि भवन्तीत्यर्थः ॥ २ ॥

एवं निमित्तानि दर्शयित्वा इदानीं तद्दोषनिर्बर्हणसाधनं सेतिकर्तव्यताकं होमं दर्शयति—

**इन्द्रायेन्दो मरुत्वते (सा. ४७२) इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति । इन्द्राय स्वाहा, शचीपतये स्वाहा, वज्रपाणये स्वाहा, ईश्वराय स्वाहा, सर्वपापशमनाय स्वाहा इति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ३ ॥**

स्थालीपाकं स्थालीपाकविधानमनतिक्रम्य चरुं श्रपयित्वा इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः अर्कस्य योनिमासदम् ॥ (सा. ४७२) इत्यनया ऋचा तं हुत्वा पुनरिन्द्राय स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः पञ्चभिराज्याहुतिभिरभिजुहोति । जुहुयात् । ततस्तत्र न्यूनातिरेकप्रायश्चित्तार्थं भूःस्वाहेत्यादिभिर्व्याहृतिभिर्हुत्वा अथ पश्चात् इन्द्रायेन्दो (सा. ४७२) इत्यस्यामृचि अष्टोत्तरशतं साम गायेत् । अनन्तरं स्वस्तिवाचनादिकं पूर्ववत् कुर्यात् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे षष्ठाध्याये तृतीयः खण्डः ॥ ३ ॥

---

1. M. प्रभञ्जनम् । तेषु तेषु for भञ्जनेषु । तेषु.
2. J. अथवा for अपि वा; RJTI. om. अप्रमीयाः प्रमापणायोग्याः.
3. J. आसनादि, MT. आरामादि for हारादि; R. ins ०धरण० and I ०दरण० after हारादि ; J. प्रभञ्जना० for भञ्जना०; MT. भञ्जनानि. for भञ्जनादीनि.
4. R. om. प्रायश्चित्तानि ; R. adds एवं निमित्तानि भवन्तीत्यर्थः after भवन्तीत्यर्थः ॥
5. RI. ०निर्हरण० for ०निबर्हण०
8. JM. ०हुतीर् for ०हुतिभिर्.
11. RI. ०विधिम् for ०विधानम्.
14. J. तत्रत्यं M. तत्रत्वं for तत्र ; RI. स्वाहेत्यादि for स्वाहेत्यादिभिः.
16. R. adds स्वस्तिदा विशपतिरित्यादिभिः after ०वाचनादिकं.

# चतुर्थः खण्डः

यान्यनिमित्तविशेषे होमविशेषं दर्शयितुं तदर्थमपि किंचिन्निमित्तं दर्शयति—

**स दक्षिणां दिशमन्वावर्तते ॥ १ ॥**

सः वक्ष्यमाणाद्भुतविशेषनिमित्तवान् होमाधिकारी दक्षिणां दिशम् अन्वीक्ष्य आवर्तते । होमार्थं प्रवर्तते । निमित्तविशेषाणां दक्षिणाया दिशोऽपि याम्यत्वाविशेषात् ॥ १ ॥

इदानीं निमित्तमिशेषान् दर्शयति—

**अथ यदास्य प्रजायां पशुषु शरीरे वारिष्टानि प्रादुर्भवन्ति । व्याधयो वा अनेकविधा अतिस्वप्नमस्वप्नमतिभोजनमभोजनमालस्यं व्रणमजीर्णनिद्रा[जागरा]णीत्येवमादीनि । तान्येतानि सर्वाणि यमदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ॥ २ ॥**

अथ पुनः यदास्य पुरुषस्य संबन्धिषु प्रजया पुत्रादिकया सहितेषु पशुषु गवादिषु स्वशरीरे वारिष्टानि पीडाः प्रादुर्भवन्ति । अथवा अनेकविधा ज्वरादयो व्याधयः प्रादुर्भवन्ति । तथा अतिस्वप्नं दुःस्वप्नं दृश्येत । अस्वप्नम् अनिद्रा । अतिभोजनं भस्मकरोगवशेन बहुतराभ्यवहारः ।

---

2. J. om. ०विशेषे ; M. नियमं for निमित्तं.
6. JM. om. प्रवर्तते; RI. दाक्षिणा, M. दक्षिण० for दक्षिणाया.
11. RIJ. om. इति.
16. J. दर्शनं for दुःस्वप्नं; M. दर्शनं T. दर्शितं for दृश्येत.

अभोजनम् अरुच्यादिना । आलस्यं वृथालसता । व्रणं शस्त्रादिना ग्रन्थ्यादिना वा । अजीर्णं क्षुदभावेन भुक्तस्याहारस्याजरणम् । निद्रा अतिनिद्रा । [जागरं] च । इत्येवमादीनि नेत्रादिदोषाः । तान्येतानि सर्वाणि यमदेवत्यानि अद्भुतानि प्रायश्चित्तानि प्रायश्चित्तनिमित्तानि भवन्ति ॥ २ ॥

एवं निमित्तविशेषान् दर्शयित्वा इदानीं तद्धेतुदोषनिर्हरणसाधनं होमं सेतिकर्तव्यताकं दर्शयति—

**नाके सुपर्णम् (सा. ३२०) इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति । यमाय स्वाहा, प्रेताधिपतये स्वाहा, दण्डपाणये स्वाहा, ईश्वराय स्वाहा, सर्वपापशमनाय स्वाहा, इति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ३ ॥**

नाके सुपर्णम् (सा. ३२०) इत्यनया स्थालीपाकं हुत्वा पुनर्यमाय स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः पञ्चभिराज्याहुतिभिरभिजुहोति जुहुयात् । ततस्तत्र न्यूनातिरेकप्रायश्चित्तार्थं व्याहृतिभिर्हुत्वा अथ पश्चात् नाके सुपर्णम् (सा. ३२०) इत्यस्यामृचि साम गायेत् । पूर्ववत् स्वस्तिवाचनं कुर्यादिति ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये षष्ठाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

1. JMT. om. शस्त्रादिना ग्रन्थ्यादिना वा.
2. RI. निद्रादयः for निद्रा; JMT. om. निद्रा.
3. RI. अतिनिद्रादयः for अतिनिद्रा; TMJ. om. इति.
4. JT. om. प्रायश्चित्तानि.
5. R. adds यः before एवं; T. निर्म्रहण॰ for ॰निर्हरण॰
11. RI. om. नाके....पुनर्; M. om. नाके...इत्यनया.
12. M. om. पञ्चभिर्मन्त्रैः.
13. RI. add च after व्याहृतिभिः; RMTI. om. अथ.
15. R. adds अर्थः after इति.

## पञ्चमः खण्डः

अथ वारुणनिमित्तविशेषे होमविशेषं दर्शयितुं तदर्थं नियमं दर्शयति—

**स प्रतीचीं दिशमन्वावर्तते ॥ १ ॥**

स वक्ष्यमाणनिमित्तवान् अधिकारी प्रतीचीं पश्चिमां दिशम् अन्वीक्ष्य आवर्तते होमकरणार्थं प्रवर्तेत । तन्निमित्तविशेषाणां प्रतीच्या दिशश्च वरुणसंबन्धित्वाविशेषात् ॥ १ ॥

इदानीं निमित्तविशेषान् दर्शयति—

**अथ यदास्य क्षेत्रगृहसंस्थेषु धान्येष्वीतयः प्रादुर्भवन्ति । ईतयो वानेकविधाः— आखु-पतङ्ग-पिपीलिका-मध्वक-भौमक-शुक-शरभक-सौक्ष्मक इत्येवमादीनि । तान्येतानि सर्वाणि वरुणदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ॥ २ ॥**

अथ यदास्य पुरुषस्य क्षेत्रगृहसंस्थेषु क्षेत्रस्थेषु गृहस्थितेषु वा धान्येष्वीतयः वक्ष्यमाणाः प्रादुर्भवन्ति । ईतीरेव प्रदर्शयति । ईतयो वा अनेकविधा अनेकप्रकाराः खलु । आखुः मूषिकः । पतङ्गः पक्षिविशेषः । पिपीलिकाः प्रसिद्धाः । मध्वका मधुमक्षिकाः । भौमकाः भूमौ भवाः

---

2. RI. वरुण॰ for वारुण॰; J. ॰विशेष॰ for ॰विशेषे; M. om. विशेषे होम॰.

4. M. adds अपि होम॰ after निमित्तवान्.

5. RIT. प्रवर्तते for प्रवर्तेत; JM. om. तन्.

7. T. ॰विशेषे होमविशेषं for ॰विशेषान्.

13. RMI. om. क्षेत्रगृहसंस्थेषु; J. क्षेत्रस्थितेषु for क्षेत्रस्थेषु; M. गृहसंस्थेषु for गृहस्थितेषु.

14. JM. ईतीनामेव प्रदर्शनम् for ईतीरेव प्रदर्शयति; J. add ताः before ईतयो॰

16. RI. मक्षिकाः, J. मधुमक्षिकाविशेषाः for मधुमक्षिकाः.

क्षुद्रजन्तवः। शुकाः कीराः। शरभकाः प्रसिद्धाः। सौक्ष्मकाः सूक्ष्मसंबन्धि-जन्तवः। इत्येवमादीनि अतिवृष्ट्यादीनि। तान्येतानि सर्वाण्यद्भुतानि वरुण-देवत्यानि प्रायश्चित्तानि प्रायश्चित्तनिमित्तानि भवन्ति ॥ २ ॥

अथ तद्धेतुपापनिर्हरणसाधनं होमं सेतिकर्तव्यताकं दर्शयति—

**घृतवती (सा. ३७८) इति स्थालीपकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वरुणाय स्वाहा, अपां पतये स्वाहा, पाशपाणये स्वाहा, ईश्वराय स्वाहा, सर्वपापशमनाय स्वाहा इति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ३ ॥**

३१२३ १२ ३२३२ ३१ २३१२ ३१२
घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
१२ ३१ २र ३ १२३ १२ ३२३ १२
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥
(सा. ३७८) इत्येषा ऋक्। अन्यत् पूर्ववद्व्याख्येयम् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये षष्ठाध्याये पञ्चमः खण्डः ॥ ५ ॥

1. J. कीटाः, M. शाराः, T. कीरकाः for कीराः; J. संबन्धिनः for संबन्धिजन्तवः.

2. RI. om. अतिवृष्ट्यादीनि; M. अवृष्ट्यादीनि for अतिवृष्ट्यादीनि.

# षष्ठः खण्डः

अथ वैश्रवणनैमित्तिकं होमं दर्शयितुं तदर्थमपि किंचिन्नियमं दर्शयति—

**स उदीचीं दिशमन्वावर्तते ॥ १ ॥**

स वक्ष्यमाणनिमित्तवान् अधिकारी उदीचीं दिशम् अन्वीक्ष्य आवर्तते प्रवर्तते होमार्थम्। निमित्तविशेषाणाम् उदीच्या दिशश्च वैश्रवणसंबन्धित्वाविशेषात् ॥ १ ॥

इदानीं निमित्तविशेषान् दर्शयति—

**अथ यदास्य कनकरजतवरवस्त्रवज्रवैडूर्यमुक्तामणिवियोगो भवति। आरम्भा वा विपद्यन्ते। अथवा अन्यानि क्रूराणि मित्राणि वा विरज्यन्ते। अरिष्टानि वा वयांसि गृहमध्यासन्ते। वाल्मीकभौमानि वा जायन्ते। छत्राकं वोपजायते। मधूनि वा निलीयन्ते। इत्येवमादीनि। तान्येतानि सर्वाणि वैश्रवणदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ॥ २ ॥**

अथ पुनरस्य पुरुषस्य यदा कनकादिभ्यो वियोगो भवति। अथवा आरम्भा उद्योगा विपद्यन्ते। निष्फला भवन्ति। अथवा, अन्यानि क्रूराणि पिशाचादिदर्शनादीनि, अपि वा मित्राणि सुहृदो विरज्यन्ते 17

---

5. JM. om. प्रवर्तते ; JM. कुबेर० for वैश्रवण० ; RI. संबन्ध० for संबन्धित्व०

11. अध्यासन्ते *See CN.*

12. M. ०दृश्यते for ०जायते.

16. M. विपच्यन्ते for विपद्यन्ते.

विद्विषन्ति । अथवा, अरिष्टानि दुःखसूचकानि । वयांसि काकादीनि स्वगृहमध्यासन्ते । वाल्मीकभौमानि भूमौ भवानि प्राणिजातानि जायन्ते । प्रादुर्भवन्ति । अथवा छत्राकं सिलिग्रह उपदृश्यते । अथवा मधूनि सरघा वाभिनिलीयन्ते स्वगृहे । एवमादीनि तान्येतानि सर्वाणि अन्यान्यपि अद्भुतानि वैश्रवणदेवत्यानि कौबेराणि प्रायश्चित्तानि प्रायश्चित्तनिमित्तानि भवन्ति ॥ २ ॥

अथ तद्धेतुकदोषनिर्हरणसाधनं होमविशेषं सेतिकर्तव्यताकं दर्शयति—

**अभित्यं देवम् (सा. ४६४) इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति । वैश्रवणाय स्वाहा, यक्षाधिपतये स्वाहा, हिरण्यपाणये स्वाहा, ईश्वराय स्वाहा, सर्वपापशामनाय स्वाहा इति व्याहृतिभिर्हुत्वाथ साम गायेत् ॥ ३ ॥**

३ २उ ३ १ २ ३ १२ ३क २र ३ १ २ ३ १ २ ३ १ २
अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ
३ २ ३ २ ३ २ ३ २ ३ २उ ३ २ ३ १ १र ३ १ ५ ३
रत्नधामभि प्रियं मतिम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि
१ ३ ३ १ २ ३ १ २
हिरण्यपाणिरममीत सुक्रतुः कृपा स्वः ॥ (सा. ४६४) इत्येषा ऋक् । अन्यत् पूर्ववद्व्याख्येयम् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणे षष्ठाध्याये षष्ठः खण्डः ॥ ६ ॥

---

2. M. अध्यासन्ने for अध्यासन्ते; JM. add: गृहे after अध्यासन्ते.

3. J. छिलिहिन्दः गृहजं, R. सिळिगृहः M. सिळिकं for सिलिग्रहः; उपदृश्यते *See CN.*

4. for तान्येतानि सर्वाणि अन्यानि JM. subst: अन्यान्यपि सर्वाणि.

7. for निर्हरण० J. subst: ०निबर्हण० ; J. होमं, M. स्तोमं for होमविशेषं.

10. *JM.* आज्याहुतीः for आज्याहुतिभिः.

## सप्तमः खण्डः

अथ अग्निदेवताकनिमित्तविशेषे होमविशेषं दर्शयितुं तदर्थमपि नियमं दर्शयति—

**स पृथिवीमन्वावर्तते ॥ १ ॥**

स निमित्तविशेषवान् पृथिवीमन्वीक्ष्यावर्तते होमार्थं प्रवर्तते । वक्ष्यमाणनिमित्तानां पृथिव्याश्चाग्नेयत्वाविशेषात् ॥ १ ॥

इदानीं निमित्तविशेषान् दर्शयति—

**अथ यदास्य पृथिवी तटति, स्फुटति, कूजति, कम्पति, ज्वलति, रुदति, धूमायति, अकस्मात्सलिलमुद्गिरति, प्लवन्न मज्जति, न निमग्नमुत्प्लवति, अकाले च पुष्पफलमभिनिर्वर्तत्यश्वतरीगर्भो जायते; यदा मज्जति हस्तिनी, भूकम्पो जायते, प्रासादं भिनत्ति यत्र तत्र राजा विनश्यति गौर्गृहमारोहेद् ग्राममहिषीत्येवमादीनि तान्येतानि सर्वाण्यग्निदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ॥ २ ॥**

अथ पुनरस्य संबन्धिनी पृथिवी तटति तठतठेति शब्दं करोति । स्फुटति भिद्यते । कूजति शब्दं करोति । कम्पति कम्पते । ज्वलति

---

2. JM. तदङ्गत्वेनादौ पृथिवीनिरीक्षणपूर्वकमावर्तनं for तदर्थमपि नियमं.
5. J. om. स निमित्त......०न्वीक्ष्यावर्तते; JM. om. प्रवर्तते.
10. M. नग्नम for निमग्नम ; KI. om. न before निमग्नम्.
11. RIS. निर्वर्तयति for निर्वर्तति; JRI. add इति after निर्वर्तति.
12. MSh Ms. प्रासादा[न्] for प्रासादं.

अग्न्यादिसंबन्धं विनैव । रुदति रोदिति । धूमायति अग्निं विनैव धूमप्रचुरो भवति । अकस्मात्सलिलमुद्गिरति वृष्टिं विनैव । तथा सलिले प्रक्षिप्तः पाषाणः प्लवन्न मज्जति प्लवमान एव तिष्ठति, न तु मज्जति । निमग्नं मृतशरीरम् उदके प्रक्षिप्तं नोत्प्लवति, किं तु निमज्जति । किं च, अकाले पुष्पं च फलं च पुष्पफलम् अभिनिर्वर्तति वृक्षमभितो जायते । तथा अश्वतर्यां गर्भो जायते । अश्वतर्याः प्रजापतिना आत्तरेतस्कत्वात् गर्भाभावः । तस्मादश्वतरी अप्रजा । आत्तरेता हि (तां. ब्रा. ६.१.४.) इति श्रुतेः । तथा यदा यस्मिन् देशे हस्तिनी करिणी मज्जति निर्निमित्तमुदके निमज्जति । तथा यत्र यस्मिन् देशे भूकम्पो जायते तत्र तदा तद्देशाधिपती राजा विनश्यति । किं च यदा गौर्गृहमारोहेत् ग्राममहिषी वा । गृहमारोहेद् इत्यनुषङ्गः । आरण्यकमहिष्या गृहारोहणासंभवाद् ग्राममहिषीति विशेषणम् । इत्येवमादीनि ग्रामसूकरादेर्गृहारोहणादीनि इत्यादिशब्दार्थः । तान्येतानि सर्वाण्यद्भुतान्यग्निदेवत्यानि प्रायश्चित्तानि प्रायश्चित्तनिमित्तानि भवन्ति ॥ २ ॥

तत्र तद्धेतुदुरितापूर्वनिबर्हणसाधनं होमं सेतिकर्तव्यताकं दर्शयति—

**अग्निं दूतं वृणीमहे (सा. ३) इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति । अग्नये स्वाहा, हविष्पतये**

---

1. J. om. आग्न्यादि०; R. om. एव.
2. JM. transp. सलिलमुद्गिरति after विनैव.
3. JM. om. न मज्जति. *See CN*; M. न नग्नं for निमग्नं.
4. RI. उत्प्लवते for उत्प्लवति; M. adds च after अकाले.
5. RI. निर्वर्तयति for निर्वर्तति; J. adds इति after निर्वर्तति; JM· after तथा add सति; RI. अश्वतरी० for अश्वतर्यां.
6. R. आक्तरेतस्कत्वात्, JM. अरेतस्कत्वात् for आत्तरेतस्कत्वात्; R. अश्वतरीयप्रजा, JM. अश्वतरी न जायते for अश्वतरी अप्रजा.
7. R. आक्तरेता, J. अरेतां, M. आर्तरेता for आत्तरेता; RI. श्रुतिप्रसिद्धः, J. श्रुतिप्रसिद्धिः for श्रुतेः ।
10. J. om. वा । गृहम्.
11. M. adds. पूर्ववद् before अनुषङ्गः; J. ०मनुष्य० for ०महिष्या.
12. J. om. (आ)देः; M. ०रोहणाद् for रोहणादीनि; RJI. om. इति.
14. RMI. ०साध्नन० for ०साधनं; M. ०कर्तव्यत्वं for ०कर्तव्यताकं.
16. JM. ०हुतीः for ०हुतिभिः.

**स्वाहा, अर्चिःपाणये स्वाहा, ईश्वराय स्वाहा, सर्वपापशमनाय स्वाहा इति व्याहृतिभिर्हुत्वा अथ साम गायेत् ॥ ३ ॥**

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ (सा. ३) इत्यनया ऋचा स्थालीपाकविधानेन चरुं श्रपयित्वा तं हुत्वा पुनरग्नये स्वाहेत्यादिभिः पञ्चभिः मन्त्रैः पञ्चभिराज्याहुतिभिरभिजुहोति । जुहुयात् । पुनर्न्यूनातिरेकप्रायश्चित्तार्थं व्याहृतिभिर्हुत्वा यथोक्तायामृचि पूर्ववत् साम गायेत् । स्वस्तिवाचनादि पूर्ववत् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये षष्ठाध्याये सप्तमः खण्डः ॥ ७ ॥

---

4. MI. ०पाकेन for ०पाक०.
5. RI. पञ्चाज्याहुतीः for पञ्चभिराज्याहुतिभिः.
6. RIM. व्याहृतिहोमं कृत्वा for व्याहृतिभिर्हुत्वा.
7. J. om. स्वस्तिवाचनादि पूर्ववत्.

# अष्टमः खण्डः

अथ वायुदेवताकनिमित्तविशेषे होमविशेषं दर्शयितुं तदङ्गत्वेनादौ अन्तरिक्षनिरीक्षणपूर्वकमावर्तनं दर्शयति—

**सोऽन्तरिक्षमन्वावर्तते ॥ १ ॥**

वक्ष्यमाणनिमित्तानामन्तरिक्षस्य च वायुसंबन्धाविशेषात् वक्ष्यमाणनिमित्तविशेषवानधिकारी अन्तरिक्षम् अन्वीक्ष्य होमार्थं प्रवर्तते ॥ १ ॥

इदानीं निमित्तविशेषान् दर्शयति—

**अथ यदास्य विवाता वाता वायन्ते, अभ्रेषु चापरूपाणि दृश्यन्ते, खर-करभ-मन्थ-कङ्क-कपोत-उलूक-काक-गृध्र-श्येन-भास-वायस-गोमायु-संस्थान्युपरि पांसुमांसपेश्यस्थि-रुधिरवर्षाणि प्रवर्तन्ते, काकमिथुनानि दृश्यन्ते, रात्रौ मणिधनुं पश्येत्, शशका ग्रामं प्रविशन्ति, वृक्षाः स्रवन्ति रुधिराणि, आकाशे राजकुलं वसति इत्येवमादीनि तान्येतानि सर्वाणि वायुदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ॥ २ ॥**

---

2. RI. om. तदङ्गत्वेन.

5. J. ०संबन्धित्व०, M. ०संबन्धता० for ०संबन्ध० ; M. ०विशेषणात् for विशेषात् ; JM. om. वक्ष्यमाण...प्रवर्तते.

7. MI. add अथ before इदानीं ; M. विशेषणं, I. विशेषं for विशेषान्.

8. M. भेषज० for अभ्रेषु चाप०

9. I. मण्ड for मन्थ.

11. R. मणिं धनुं, I. मणिधनं, MS. मणिधनुः for मणिधनुं.

13. MIShMs. वसन्ति for वसति ; M. adds तान्येवमादीनि before तानि.

अथ पुनरस्य देशा यदा विवाता वातमात्ररहिता अतिवाता अतिशयितवाता वायन्ते । अय वय गताविति धातुः । स्वरितेत् (Cp. पा. १.३.७२) । अभ्रेषु च अपरूपाणि पर्वतादिषु निर्निमित्तं भ्रंशकृतानि विरुद्धानि रूपाणि दृश्यन्ते । तथा अस्य गृहाणि । खरः गर्दभः । करभकः क्रमेलकः । मन्थो मृगविशेषः । कङ्कः पक्षिविशेषः । कपोतादयः प्रसिद्धाः । गोमायुः क्रोष्टा । एतैः प्रविष्टानि दृश्यन्ते । किंच, उपरि अन्तरिक्षे पांसवो धूलयः । मांसपेशी मांसखण्डः । अस्थिरुधिरे प्रसिद्धे । एतेषां वर्षाणि प्रवर्तन्ते । तथा काकमिथुनानि काकमैथुनानि दृश्यन्ते । तथा रात्रौ मणिधनुं इन्द्रधनुः पश्येत् । किं च शशकाः शशाश्च ग्रामं यदा प्रविशन्ति । वृक्षाश्च रुधिराणि स्रवन्ति । आकाशे राजकुलं वसति । गन्धर्वनगरादिकमवस्थितं दृश्यत इति शेषः । इत्येवमादीनि । तान्येतानि सर्वाणि वायुदेवत्यान्यद्भुतानि प्रायश्चित्तानि प्रायश्चित्तनिमित्तानि भवन्ति ॥ २ ॥

---

1. J. यस्य देशेऽधिकमावान्मात्राधिकाः for अस्य...रहिताः; M. adds ते after विवाताः ; JM. om. अतिवाताः *See CN.*

2. J. adds वर्तन्ते after (अ)यन्ते.

3. M. तन्द्रेषजारूपाणि, I. भेषजापररूपाणि for अभ्रेषु च अपरूपाणि ; RJ. निर्निमित्तत्वं, M. निमित्त for निर्निमित्तं ; J. प्राकृतात् for भ्रंशकृतानि.

4. M. ०कृतविरूपाणि for ०कृतानि विरुद्धानि रूपाणि.

5. M. करम्भकः for करभकः ; RI. om. करभकः; J. कङ्क० for कङ्कः पक्षिविशेषः ; M. om. कङ्कः पक्षिविशेषः.

6. RI. गोमायवः क्रोष्टारः for गोमायुः क्रोष्टा ; RI. तथा for किं च and add स्वस्य गृहस्य वा befor उपरि.

7. RI. ०रुधिराणां च for अस्थिरुधिरे प्रसिद्धे । एतेषां.

8. M. ०मिथुनादि च, J. मिथुनानि च for ०मिथुनानि ; MJ. om. काकमैथुनानि.

9. RMI. मणिधनुः for मणिधनुं; J. इन्द्रधनुं for इन्द्रधनुः; J. om. शशाः ; MIR. सग्रामं for ग्रामं ; RI. transp. यदा before ग्रामं.

10. J. वृक्षेभ्यः for वृक्षाः ; M. वसन्ति for वसति and om. गन्धर्व...विध्यन्त० (p. २१४. L. १.)

11. RI. पश्यत० for दृश्यत ; J. अर्थः for शेषः.

12. J. om. प्रायश्चित्तानि.

अथ तद्धेतुदुरितापूर्वनिबर्हणसाधनं होमं विध्यन्तसहितं दर्शयति—

वात आवातु भेषजम् (सा. १८४) इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति । वायवे स्वाहा, महद्भूताधिपतये स्वाहा, शीघ्रपाणये स्वाहा, ईश्वराय स्वाहा, सर्वपापशमनाय स्वाहा इति व्याहृतिभिर्हुत्वा अथ साम गायेत् ॥ ३ ॥

२ ३ १ २ ३ १ ३ १ २ ३ १ २ ३ २ २ ३ १ २
वात आ वातु भेषजꣳ शम्भु मयोभु नो हृदे । प्र न आयूꣳषि तारिषत् ॥ (सा. १८४) इत्येषा ऋक् । अन्यत् पूर्ववद् व्याख्येयम् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये षष्ठाध्याये अष्टमः खण्डः ॥ ८ ॥

1. RI. om. ०निबर्हण०
3. JM. ०हुती for ०हुतिभि०

## नवमः खण्डः

अथ सोमदेवताकनिमित्तविशेषे होमविशेषं दर्शयितुं तदङ्गत्वेन द्युनिरीक्षणपूर्वकमावर्तनं दर्शयति—

**स दिवमन्वावर्तते ॥ १ ॥**

स वक्ष्यमाणनिमित्तवान् दिवं द्युलोकमन्वीक्ष्यावर्तते । प्रवर्तते होमार्थम् । दिवो वक्ष्यमाणनिमित्तानां च सोमसंबन्धित्वाविशेषात् ॥ १ ॥

इदानीं निमित्तविशेषान् दर्शयति—

**अथ यदास्य तारावर्षाणि चोल्काः पतन्ति, निपतन्ति, धूमायन्ति, दिशो दह्यन्ति, केतवश्चोत्तिष्ठन्ति, गवां शृङ्गेषु धूमो जायते, गवां स्तनेषु रुधिरं स्रवति, अत्यर्थं हिमं निपतति, इत्येवमादीनि तान्येतानि सर्वाणि सोमदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ॥ २ ॥**

अथ पुनरस्य गोचरे यदा तारावर्षाणि नक्षत्रवृष्टयः पतन्ति जायन्त इत्यर्थः । उल्काश्च निपतन्ति दिशो धूमायन्ति । निर्निमित्तं धूमयुक्ता इव दृश्यन्त इत्यर्थः । तथा ता एव दह्यन्ति दह्यन्ते; ज्वालारूपा दृश्यन्ते इत्यर्थः ।

---

5. JM. वक्ष्यमाणनिमित्तवान्; R. दिव्यं M. दीपम् for दिवं; JM. om. द्युलोकम्; JM. om. प्रवर्तते होमार्थम्.

6. J. ० देवत्वात्, M. ० देवत्यत्वात् for ०संबन्धित्वाविशेषात्.

7. ०विशेषकं for विशेषान्.

13. M. before अथ adds: इदानीं तद्धेतुं दुरितापूर्वपरिहारार्थं सविद्युतं होमं दर्शयति—.

14. M. ०युक्तवद् for ०युक्ता इव.

15. RI. अथ for तथा; J. om. दह्यन्ते.

किंच, अन्तरिक्षे केतवो धूमकेतवः उत्तिष्ठन्ति । तथा गवां शृङ्गेषु विषाणेषु धूमो जायते । तथा गवां स्तनेषु रुधिरम् एव स्रवति ; न पयः । किंच, अत्यर्थं हिमं बहुलं निपततीत्येवमादीनि सर्वाण्यद्भुतानि सोमदेवत्यानि प्रायश्चित्तनिमित्तानि भवन्ति ॥ २ ॥

इदानीं तद्धेतुदुरितापूर्वपरिहारार्थं होमं दर्शयति—

**सोमं राजानं वरुणम् (सा. ९१) इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति । सोमाय स्वाहा, नक्षत्राधिपतये स्वाहा, शीतपाणये स्वाहा, ईश्वराय स्वाहा, सर्वपापशमनाय स्वाहा इति व्याहृतिभिर्हुत्वा अथ साम गायेत् ॥ ३ ॥**

सोमं राजानं वरुणमग्निमन्वारभामहे । आदित्यं विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ (सा. ९१) इत्येषा ऋक् । अन्यत् पूर्ववद् व्याख्येयम् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये षष्ठाध्याये नवमः खण्डः ॥ ९ ॥

---

2. RI. रुधिराणि स्रवन्ति for रुधिरम् एव स्रवति.
5. RI. before होमं add संविधत्ते.
7. J. ०हुतीः for ०हुतिभिः.

# दशमः खण्डः

अथ वैष्णवाद्भुतविशेषे होमविशेषं दर्शयितुं तदङ्गत्वेन परस्या दिवो निरीक्षणपूर्वकमावर्तनं दर्शयति—

**स परं दिवमन्वावर्तते ॥ १ ॥**

स वक्ष्यमाणाद्भुतविशेषनिमित्तवानधिकारी पराम् उत्कृष्टां वैष्णवीं दिवम् अन्वीक्ष्यावर्तते । होमार्थं प्रवर्तते । निमित्तानां दिश(व?)श्च वैष्णवत्वात् ॥ १ ॥

इदानीं निमित्तविशेषान् दर्शयति—

**अथ यदास्यायुक्तानि यानानि प्रवर्तन्ते, देवतायतनानि कम्पन्ते, दैवतप्रतिमा हसन्ति, रुदन्ति, गायन्ति, नृत्यन्ति, स्फुटन्ति, स्विद्यन्ति, उन्मीलन्ति, निमीलन्ति, प्रतिप्रयान्ति नद्यः, कबन्धमादित्ये दृश्यते, विजले च परिविष्यते, केतु-पताक-च्छत्र-वज्र-विषाणानि प्रज्वलन्ति, अश्वानां च वालधीष्वङ्गाराः क्षरन्ति, अहतानि चर्माणि कनिक्रन्त इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ॥ २ ॥**

---

2. M. om. ॰विशेषे होम॰.

4. M. om. स परं दिवमन्वावर्तते...दर्शयति—(L. 8)

6. J. om. प्रवर्तते.

10. M. देवता॰ for दैवत॰

11. M. adds भिद्यन्ति after स्विद्यन्ति; M. उन्मीलयन्ति निमीलयन्ति for उन्मीलन्ति निमीलन्ति.

14. IJ. मर्माणि for चर्माणि.

15. R. कनिक्रन्दन्त॰; J. कनिकदत॰ M. कनीकन्त॰ for कनिक्रन्त॰

अथ पुनरस्य पुरुषस्य यदा यानानि अयुक्तानि अयोग्यानि खरमहिषादीनि प्रवर्तन्ते । स्वप्नावस्थायां तथास्य गोचरे भवति । तथा देवतायतनानि कम्पन्ते । निर्निमित्तं चलन्ति । तथा दैवतप्रतिमा हसन्ति हासं कुर्वन्ति । तथा रुदन्ति अश्रूणि विमुञ्चन्ति । गायन्ति गानं कुर्वन्ति । नृत्यन्ति गात्राणि विक्षिपन्ति । स्फुटन्ति एकदेशतः स्फुटनं प्राप्नुवन्ति । तथा स्विद्यन्ति स्वेदनं प्राप्नुवन्ति । भिद्यन्ति विदीर्यन्ते । उन्मीलन्ति नेत्रोन्मीलनं कुर्वन्ति । निमीलन्ति च । तथा नद्यश्च प्रतिप्रयान्ति वैपरीत्येन प्रवहन्ति । किंच, आदित्ये तपति सति कबन्धं शिरोरहितं शरीरं स्वच्छायायाः दृश्यते । तथा विजले जलरहिते अवृष्टिकाले परिविष्यते चन्द्रादित्ययोः परिवेषो दृश्यते । तथा केतवो ध्वजाः । पताकाः क्षुद्रध्वजाः । छत्रवज्रविषाणानि,–विषाणं गजविषाणनिर्मितम्,–एतानि निष्कारणं प्रज्वलन्ति । अश्वानां च वालधीषु अङ्गाराः क्षरन्ति पतन्ति । अहतानि दण्डादिभिरताडितानि

---

1. JM. यस्य for अस्य.

2. R गोशिर॰ for गोचरे and om. भवति । तथा ; I. om. भवति ; J. after. गोचरे adds ता एव देवता उच्यन्ते युज्यन्ते येष्वपि.

3. M. after. ॰यतनानि adds: शिवविष्णवाद्यालयानि ; M. om. निर्निमित्तं ; JM. देवता for दैवत॰; M. adds शिवलिङ्गादीनि before हसन्ति; J. adds च after ॰प्रतिमाः.

4, RJI. om. हासं कुर्वन्ति and अश्रूणि विमुञ्चन्ति; J. om. गानं कुर्वन्ति.

5. RI. om. विक्षिपन्ति ; J. च तथा for विक्षिपन्ति ; M. गात्रस्फोटं कुर्वन्ति for एकदेशतः स्फुटनं प्राप्नुवन्ति.

6. M. स्वेदयुक्ता भवन्ति for स्वेदनं प्राप्नुवन्ति; J. स्विद्यन्ते for स्विद्यन्ति ; J. om. स्वेदनं प्राप्नुवन्ति । भिद्यन्ति ; M. after प्राप्नुवन्ति adds: सर्वत्र प्रतिमा देवता इत्यन्ते (उच्यन्ते ?)युज्यन्ते । येष्विति । देवता ; J. after विदीर्यन्ते adds च. See *CN;* M. उन्मीलयन्ति for उन्मीलन्ति

7. M. नेत्रचालनं for नेत्रोन्मीलनं ; M. निमीलनं निश्चलनं for निमीलन्ति ; M· om. च । तथा.

8. M. ॰च्छायायां, I. ॰च्छाया for ॰च्छायायाः

10. JM. om. पताकाः...निर्मितं ; केतवः See *CN.*

11. J. तदानीं M. तदा for एतानि ; M. व्रजन्ति for प्रज्वलन्ति.

12. M. adds वालेषु after वालधीषु ; J. तानि for अहतानि ; RI. before अताडितानि add अहतानि.

चर्माणि चर्मयुक्तानि भेर्यादीनि कनिक्रन्ते शब्दं कुर्वन्ति । इत्येवमादीनि । तान्येतानि सर्वाणि अद्भुतानि विष्णुदेवत्यानि प्रायश्चित्तानि प्रायश्चित्त-निमित्तानि भवन्ति ॥ २ ॥

इदानीं तद्धेतुदुरितापूर्वनिबर्हणसाधनं होमविशेषं सेतिकर्तव्यताकं दर्शयति—

**इदं विष्णुर्विचक्रमे (सा. २२२) इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति । विष्णवे स्वाहा, सर्वभूताधिपतये स्वाहा, चक्रपाणये स्वाहा, ईश्वराय स्वाहा, सर्वपापशमनाय स्वाहा इति व्याहृतिभिर्हुत्वा अथ साम गायेत् ॥ ३ ॥**

स्थीलापाकं स्थालीपाकविधानमनतिक्रम्य चरुं श्रपयित्वा, इदं विष्णुर्वि-चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पांसुले ॥ (सा. २२२) इत्यनया ऋचा हुत्वा पुनर् विष्णवे स्वाहेत्यादिभिः पञ्चभिर्मन्त्रैः पञ्चभिराज्याहुतिभिर-भिजुहोति । ततस्तन्न्यूनातिरेकप्रायश्चित्तार्थं व्याहृतिभिर्हुत्वा अथ पश्चात् इदं विष्णुः (सा. २२२) इत्यस्यां वैष्णव्यामृचि साम अष्टोत्तरशतं गायेत् ॥ ३ ॥

शुद्धे भूतले होमं कुर्यादिति दर्शयितुं भूशुद्धिहेतुं दर्शयति—

---

1. RI. मर्माणि मर्म० for चर्माणि चर्म० *See CN.*

2. RIM. हर्म्यपातादीनि, for तान्येतानि सर्वाणि ; JM. om. प्रायश्चित्तानि.

4. J. होमं सविध्यन्तं, M. होमं विध्यन्तं for होमविशेषं ; JM. om. सेतिकर्तव्यताकं.

12. J. om. त्रेधा...पांसुले; M. adds एषा ऋक् after इति.

13. R. om. first पञ्चभिः.

14. J. adds जुहुयात् after अभिजुहोति.

17. I. ०हेतून् for ०हेतुं.

**खननाद्दहनादभिमर्शनाद् गोभिराक्रमणाच्च चतुर्भिः शुध्यते भूमिः पञ्चमाच्चोपलेपनात् ॥ ४ ॥**

खननात् कुद्दालादिभिः । दहनादग्निना । अभिमर्शनात् मन्त्रपूर्वकं हस्तेन । गोभिराक्रमणाच्च इत्येतैः खननादिभिः चतुर्भिः भूमिः शुध्यते । तथा पञ्चमात् गोमयेनोपलेपनात् भूमिः शुध्यत इत्यनुषङ्गः ॥ ४ ॥

सामगानानन्तरं किं कुर्यादित्यत आह—

**संभारान् प्रदक्षिणमानीय ब्राह्मणान् स्वस्ति वाच्य ॥ ५ ॥**

ततः संभारान् प्रागुक्तान् दर्भादीन् होमसंभारान् प्रदक्षिणं यथा भवति तथा होमसमीपदेशमानीय ब्राह्मणानुपवेश्य स्वस्ति वाच्य पुण्याहवाचनं कृत्वा कर्म समापयेदिति शेषः ॥ ५ ॥

संभाराणां मध्ये कस्यचिदुपहतौ तस्याभ्युक्षणं शुद्धिहेतुत्वेन विधत्ते—

**एतैः संभारैर्यदुपस्पृष्टं तदभ्युक्षेत् । शाम्यति ह्यातः ॥ ६ ॥**

एतैः यथोक्तैः संभारैः यदुपस्पृष्टम् उपहतं तद् द्रव्यम् अभ्युक्षेत् स्वस्तिदा विशस्पतिः (ऋ. वे. १०.१५२.२) इत्याद्यैः स्वस्तिवाचनमन्त्रैः । अतः अभ्युक्षणादुपहतिदोषः शाम्यत्येव ॥ ६ ॥

---

3. J. कुठारा० for कुद्दाला०.

4. RI. add च after हस्तेन ; RI. transp. खननादिभिः after शुध्यते.

6. RJ. अत्र for अतः

9. M. तत् for ततः; M. प्रागुक्तादीन् for प्रागुक्तान्.

11. M. कर्मावसेत् for कर्म समापयेत्.

12. J. कैश्चित् for कस्यचित् ; RI. ०हतस्य for ०हतौ तस्य.

15. RI. om. द्रव्यम्.

नैमित्तिकहोमाङ्गत्वेन ब्राह्मणभोजनं दक्षिणां च दर्शयति—

**ब्राह्मणभोजनं हिरण्यं गौर्वासोऽश्वो भूमिर्दक्षिणा इति । शाम्यति ह्यातः । शान्त्यर्थः शान्त्यर्थः ॥ ७ ॥**

होमानन्तरं ब्राह्मणभोजनम् । भुजेर्ण्यन्ताल्ल्युट् । ब्राह्मणान् भोजयेदित्यर्थः । तथा तस्मिन् होमे हिरण्यं कनकं गौश्च वासश्च अश्वो भूमिरिति चैता दक्षिणाः सुवर्णादिकमृत्विग्भ्यो दद्यात् । अतः एवं साङ्गहोमानन्तरम् अद्भुतादिसूचितो दोषः शाम्यत्येव । यथोक्तषष्ठाध्यायप्रतिपादितः एष होमः शान्त्यर्थः । ऐन्द्राद्यद्भुतसूचितदुरितापूर्वशान्त्यर्थः । द्विरुक्तिरादरार्था । अध्यायसमाप्तिद्योतनार्था च ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे षड्विंशब्राह्मणभाष्ये षष्ठाध्याये दशमः खण्डः ॥ १० ॥

---

1. M. दक्षिणाश्च for दक्षिणां च.

3. M. ह्यथो for ह्यातः.

4. J. होमानन्तरं for भुजेर्ण्यन्ताल्ल्युट्.

5. JM. वासः for वासश्च.

6. RI. after दद्यात् add ऋत्विजो ब्राह्मणाश्च भोज्या इत्यर्थः; J. अथो for अतः.

7. RI. ०सूचितदोषनिर्हरणरूपशान्त्यर्थः । शान्तिकरणप्रयोजनं सिध्यतीति शेषः for ०सूचितो दोषः...यथोक्त०; JM. adds एषः before यथोक्त; RI. षष्ठाध्याये for षष्ठाध्याय०; M. षष्ठाध्यायोदितः for षष्ठाध्यायप्रतिपादितः.

9. RI. अद्भुतशान्ति० for अध्याय०.

10. M. Concludes with: इति दशमः खण्डः । षष्ठोऽध्यायः । माधवीये सायणाचार्यविरचिते षड्विंशब्राह्मणभाष्यं संपूर्णम् । हरिः ॐ । श्रीगुरुभ्यो नमः । श्रीदक्षिणामूर्तये नमः; J. ०विंशेऽद्भुतब्राह्मणे षष्ठाध्यायस्य for षड्विंशब्राह्मणभाष्ये षष्ठाध्याये.

11. J. after दशमः खण्डः । adds वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे द्वितीये षड्विंशब्राह्मणव्याख्याने षष्ठाध्यायः समाप्तः ॥

